# THE
# SRINGARA SEKARA BHANA.

By

**T. S. SUNDARESA SARMA**



**Published By**

THE GENERAL STORES,
*Ayyan-kadai Street, Tanjore.*



PRINTED AT THE
SRI VIDYA POWER PRESS,
KUMBAKONAM.

1938.



[Price 6 Annas.

॥ श्रीः ॥

सुन्दरेशशर्मविरचितः

# ॥ शृङ्गारशेखरभाणः ॥

केलीसौधगृहं स्मिताञ्चितमुखः क्षोणीसुतायाः करं
प्रेम्णाऽऽलम्ब्य भुजान्तरे मलयजं धृत्वा स्रजाऽलंकृते ।
कर्पूरद्रववीटिकामपि करेणादाय चेटीकरा-
च्छृङ्गारः स तु मूर्तिमानिव रघूत्तंसो विशन्पातु वः ॥१॥

( नान्द्यन्ते )

सूत्रधारः—

संभिन्नं कुचमण्डलं लघुतरो रोमावलीनीलिमा
वक्रत्वं च विलोचने तरलता गात्रव्रतत्यामपि ।
येनोदेति वचःसु चाटुरचना बिम्बाधरे वा सुधा
तादृक्षं नवयौवनं मृगदृशां चेतोहरं वर्धताम् ॥२॥

( इति पुष्पाञ्जलिं विकीर्य, नेपथ्याभिमुखमवलोक्य । ) मारिष, इतस्तावत् ।

( प्रविश्य )

पारिपार्श्वकः—भाव, अयमहमस्मि ।

सूत्रधारः—अद्य किल रघुवीरचरणनिरन्तरसेवानन्दभरितश्रीत्यागराजार्यवर्यपरमानुग्रहपात्रशरभोजिराजवंश्यपरिपूजितस्य, स्वाकृतिसमुन्नतिसंदर्शनसकौतुकसंकृष्यमाणनिखिललोकपरिवृतनन्दीशसमुपासितपुरोभागस्य, सकलमोक्षान्तफलदाधिवाससंवेदनोद्यत्समुन्नतमहागोपुरालंकृतमहालयप्रतिष्ठितस्य बृहदीश्वरस्य वसन्तोत्सवसंदर्शनायागतैर्नागरिकैरादिष्टोऽस्मि ।

पारिपार्श्वकः—कथमिव ?

सूत्रधारः—

अदीर्घमश्रुतं किंचिद्रूपकं रसनिर्भरम् ।
प्रयुज्य भरताचार्य मोदयस्व मनांसि नः ॥३॥ इति ।

पारिपार्श्वकः—न ज्ञायते तादृशं रूपकं यद्वा प्रयुञ्जानाः सामाजिकानावर्जयिष्यामः ।

सूत्रधारः—कथमिदं विस्मृतं सुन्दरेशशर्मणाऽचिरादेव निबद्धं शृङ्गारशेखरनामकं रूपकम् ?

सुललितपदैर्निगुम्भितमधुनातनहृदयहारिरसभावम् ।
शृङ्गारहास्यरूपकममलं शृङ्गारशेखराभिख्यम् ॥४॥

पारिपार्श्वकः—आः, ज्ञातम् । तदेवात्र प्रयोक्तव्यम् । यतः,

सभा सारज्ञेयं सरसकविसर्वस्ववचसां
वयं प्राप्ता नाट्ये सुभृशमपि नैपुण्यपदवीम् ।
कवेर्वाचो नूनं त्रिदशजनजीवातुसहजा
विधिः पुण्येनेदं सकलमपि नः संघटयति ॥५॥

परं तु विस्मयास्पदमाभाति मे यत्किल सततसमर्चितरघुनाथचरणस्य श्रीत्यागराजचरितरामामृततरङ्गिणीमुखभक्तिमयग्रन्थनिर्मातुः शमप्रवणस्यापि कवेरस्य कथं प्रवृत्ता मतिः शृङ्गारकाव्यरचनायामिति ।

सूत्रधारः—किमत्र चित्रं नाम ? अनृतशतसाध्ये वाणिज्ये व्यापृतस्यापि कथमिव मनो विनिहितं रघुकुलतिलकचरणयोः ?

विभाति कविरेष तु त्रुटितसर्वदुश्चेष्टितः
प्रशान्तहृदयः स्वयं प्रहृतसर्वचित्तैषणः ।

निजोदरकपूर्तये विहितनव्यचेलापणः
प्रभौ रघुकुलोत्तमे वितनुते हि भक्तिं पराम् ॥६॥

पारिपार्श्वकः— युक्तमेवैतत्।

भूपाला उपभोक्तुमक्षमतया काव्याङ्गनाचातुरीं
चिन्वन्तः प्रमदाजनान्नवनवान्देशाटनं कुर्वते।
कृत्वा पापमपीह मूढधनिनो वित्ते यतन्ते पुन-
र्दीनास्ते कवयो निजोदरकृते कुर्वन्ति तास्ताः कृतीः ॥७॥

सूत्रधारः— मारिष, न विलम्बनीयमस्माभिः। त्वर्यतां प्रसाधनविधानाय।

पारिपार्श्वकः— तथा।

(इति निष्क्रान्तः।)

सूत्रधारः— (परितो विलोक्य।) अहो रमणीयता वसन्तागमस्य।

माकन्दपल्लवरसानुभवोद्गतेन
कण्ठेन कोकिलयुवाऽऽह्वयतीव कान्ताम्।
भृङ्गश्चिरं विचिनुते नवमल्लिकां तां
सद्यःप्रसक्तसुमनोरजसाऽभिरामाम् ॥८॥

(पुरोऽवलोक्य।)

क एषः?

रक्तांशुकाकलितकृत्तशिरोविभागः
संदृश्यदेहरुचि चांशुकमादधानः।
ताम्बूलचर्वणसुरक्तरदच्छदोऽय-
मायाति सत्वरमिहोद्धृतलोलवेत्रः ॥९॥

(विचिन्त्य।) अयं खलु मे मातृष्वस्रीयः सौगन्धरः शृङ्गारशेखरभूमिकामादायेत एवायाति। तदनन्तरकरणीयाय यतिष्ये। (इति निष्क्रान्तः।)

प्रस्तावना।

---

( ततः प्रविशति यथानिर्दिष्टः शृङ्गारशेखरः । )

**शृङ्गारशेखरः**—( सबाष्पगद्गदम् । )

प्रियां लब्ध्वा कान्तां चिरतरकृतैरुद्यमचयै-  
र्यदा प्रेमालापानहह कृतवान्कर्णनिकटे ।  
सहस्रांशुर्घोरो ह्युदयति भृशं चण्ड इति सा  
विधुन्वाना हस्तं चकितचकिता विद्रुतवती ॥१०॥

( स्मरणमभिनीय । )

शिञ्जन्नूपुरमिन्दुबिम्बवदना मन्दं यदायात्पुरा  
मन्दस्मेरमुखेण रागविवशा यन्मामपश्यच्च सा ।  
पार्श्वे यच्च शिलातले पुलकिता हृष्टा न्यषीदत्पुन-  
र्यच्चाटूनि वचांस्यवोचदथ सा तन्मे मनः कृन्तति ॥११॥

( सास्रम् । )

पश्याम्यनङ्गविशिखाकृतिकां च कान्ता-  
माकर्णयामि मधुराणि वचांसि तानि ।

( पार्श्वतो दृष्ट्वा । )

नष्टा पुनर्नलिनपत्रसमायताक्षी  
त्वासादयेयमबलां कथमद्य दीनः ॥१२॥

( आकाशे दृष्टिं बद्ध्वा । )

अनूरुसारथे, किं मयाऽपराद्धं नाम ते? यत्प्रध्वंसयसि मे सुचिराभिलषितम् ।

स्पृशसि करैर्दिग्ललनाश्चुम्बसि नलिनीं च जातमात्रस्त्वम् ।  
विघटयसि किं दुरात्मंश्चिरलब्धां तां तु बिम्बोष्ठीम् ॥१३॥

( सक्रोधम् । ) भवतु, पश्यामि तावदद्य ते साहसम् । श्वस्तवोदयात्प्रागेव यदि तां नाधिगच्छामि, नाहं शृङ्गारशेखरः । भवतु, साधयामि । ( इति परिक्रम्य परितोऽवलोक्य च । )

रमणीयेयं क्षणदावसानवेला । संप्रति हि,

शीतांशुश्चरमाद्रिशृङ्गमयते तेजोविहीनः स्वयं
प्रेम्णाऽऽभुज्य कुमुद्वतीं प्रियतमां तारा अनादृत्य च ।
प्राच्योऽयं तु समीरणः स्तबकसंलीनान्द्विरेफव्रजा-
नुत्सार्य स्वयमेव चूतलतिकां गाढं समालिङ्गति ॥१४॥

(पुरो दृष्ट्वा ।) क एष कटिनिबद्धसमुद्धतधवलवसनः सर्वावयव-समुल्लसिततनूरुहः कृत्तकेशपाशश्चकितचकित इत एवाभिवर्तते ।

(निपुणं निरूप्य ।) कथं हेमगुप्तस्य तनयो मित्रवर्धन एव । भवतु, एनमालापयिष्ये । (इति परिक्रम्य ।) प्रियसख, कुत्र वा प्रत्यूष-समये प्रस्थितोऽसि? सभयं किं ब्रवीषि? "मा शङ्कं कुरु" इति । (स्वगतम् ।) कथमेष भृशमुद्विग्नः । (प्रकाशम ।) सखे, सर्वकार्यक्षमे शृङ्गारशेखरे स्थिते किमर्थं बिभेषि? यो वा को वा भवतु, हस्त-तलेनैव निहन्यामुं ।

भित्तयः शतसहस्रिका मया लङ्घिताः कुलवधूकृते सखे ।
घातिताश्च पतयः पराःशता मुष्टिभिस्तु मम धीरसत्तमाः ॥

ततो विस्रब्धो भण । किं ब्रवीषि? नाहमकामय आचार्य-तनूजां कनकवल्लरीमिति । (स्वगतम् ।) एष किल माधवदत्तसुता-मुपगतो गुरुणा तेन संदृष्टः प्रहृत इति मन्ये । सा किल,

प्रमुग्धा लोलाक्षी नवसमुदितैणाङ्कसुषमा
समुत्कर्षं सृष्टः प्रथयति मनोजाम्बुजजनेः ।
स्वयं यूनो दृष्ट्वा तरलविषमैरेव नयनै-
रनूढा दीर्घं सा श्वसिति च समुद्बुद्धमदना ॥१६॥

(प्रकाशम ।) किं तु तयैव स्वयमुपभुक्तोऽसि? तर्हि भाग्यवानसि ।

पुण्यफलमेव मन्ये यूनां स्वयमेव कुलवधूवरणम् ।
स्पृहणीयोऽसि सखेऽद्य प्रथितैर्विटशेखरैर्नूनम् ॥१७॥

सविषादं किं ब्रवीषि? न मया भुक्ता, शृणु यद्वृत्तमिति। अरे, यथाजात, किं त्वया नोपभुक्ता? किमु केशकर्तनमेव फलं प्राप्तम्? किं ब्रवीषि? "सा किल पठनकालेषु चिन्तनसमये च कपाटान्तरे विलीना मामेव पश्यन्ती तिष्ठेत्। चिरमित्थंभूतेऽपि गुरुकन्यकेति भीत्योदासीनतया वर्तमानं मामालक्ष्य खिन्नेव? ह्यः पुनः शिवालयं गतयोस्तत्पित्रोः, आपणं गतेषु सहाध्यायिषु, चरमगिरिमवरोहति सहस्रमरीचिमालिनि, एकान्ततया मम पार्श्वमागत्य श्लिष्टपिष्टानि वाक्यान्यभाणीत्" इति। सदृशमेवैतन्मुग्धानाम्। ततस्ततः। किं ब्रवीषि? "परिज्ञातान्तरार्थतत्त्वे मयि, रात्रौ दशमघटिकायाः परं यात्रिकगृहबहिर्वेदिकायां संकेतितं स्थानम्" इति। उचित एव स्थलविशेषश्चौर्यरतस्य। ततस्ततः। किं ब्रवीषि? "निशामुख एव भुक्त्वा क्षणमपि कृच्छ्रेण युगवन्नीत्वा, प्रसुप्तेषु सर्वजनेषु, गाढान्धकारेण समावृते नभसि, मन्दं मन्दं चलन् गृहबहिर्द्वारमासाद्य, कपाटमनर्गलं दृष्ट्वा, परां तुष्टिमुपगतः पश्यन्नेव परितो मन्दं मन्दमभिसरन्संकेतवेदिकामासादयम्" इति। सखे, धीरतरोऽसि। ततस्ततः। किं ब्रवीषि? "कचग्रहणाननुवेद्ये गाढे तमस्युपविशञ्जानुभ्यां शोधयन्मार्गं हस्तेनैव, प्रकम्पितशरीरः शनैरुपागमं यावता, तावदालग्नं करे मम पदयुगलम्" इति। भाग्यवानसि यल्लब्धं नवनीतम्। ततस्ततः। साश्रुनेत्रः किं ब्रवीषि? "नासादितं नवनीतम्। शृणु यद्वृत्तम्। सपद्येव सकौतुकेन मया जानुनि न्यस्ते हस्ते, पादेन खलु भृशं वक्षसि संताडितः पार्श्वे न्यपतम्" इति। कष्टं कष्टम्। सा किं धूर्ता त्वां प्रलोभ्य शिक्षितवती? कुलस्त्रियस्तु परं न विश्वसनीयाः।

सस्पृहा इव वीक्षन्ते प्रलपन्ति च सादरम्।
गम्यते यदि पार्श्वे तु घोषयन्ति खरा इव ॥१८॥

भवतु, अपांसुला भवितुमिच्छन्ती किमर्थं संकेतस्थानमधिगतवती? किं ब्रवीषि? "मा त्वरस्व। विषयमवधेहि। उत्थातुं कृतोद्यमे मयि सक्रोधमेकः कचं गृहीत्वा मां सुदूरमाकृष्य वैद्युतं दीपमुज्ज्वाल्य मन्मुखं वीक्षमाणः 'रे धूर्त मित्रवर्धन, अकिंचन इति जनान्वञ्चयन्नाकण्ठमपि भुञ्जानः सर्वेषु गृहेषु, शिवालयपरिचारिकामनुभवसि। साधु रे धूर्त', इत्युदीरयन्नेव कटिनिहितेन कृपाणेन मम शिरोरुहान्कृन्तन् 'गच्छ रे पाप, इयं दुष्टा वराकी जरद्गर्दभी, मद्दत्तांस्तस्करिततण्डुलानन्यांश्च तैलादीन्यथेच्छं विस्रब्धं भुक्त्वाऽन्येन केनापि सुदृढं भुज्यत इति चिरेण समर्दिहि। स एव त्वमद्यैव करग्राहं गृहीतः। मय्यपि महाशनशिवद्विजे ते साहसं दर्शयसि' इति संघुष्य संताड्य बलवत्कपोले, पदा च मामभिहत्य, क्रुधा मां निष्कास्य, कपाटं च सारवमर्गलयन्नन्तर्गतः। अहमपि यावद्रजनीं सुदूरेण तिन्त्रिणीमूल एव संगूहितशरीरो निलीनः प्रभातमनुचिन्त्य भीतभीत इत एवागच्छामि" इति। अरे विधिनेमां गमितोऽस्यवस्थाम्।

नियोजयत्येव विधिः कुकर्माणि
  प्रदत्त एतेन महत्फलानि च।
संताडयत्यन्यमनात्तकामकं
  दुर्लङ्घनिर्देश इति प्रभाति मे ॥१९॥

यत्तेन सजीव एवोन्मुक्तस्त्वमेतदपि तव सुकृतपरिपाक इति मन्ये। यतः,

सदा द्विजकुलाधमः क्षुरकृपाणपाणिर्बला-
  च्छताधिकपराङ्गनाः स हि निषेवते कामुकः।
न चापि सहते शठः सकृदपि प्रभुक्तं जनं
  समीक्षितुमपीक्षणैः परजनान्निहन्ति क्रुधा ॥२०॥

अपि च,

अहरपि च दिनान्तो यामिनी प्रत्युषश्च
प्रसभवरवधूटीसंगमायैव कालः ।
न च गणयति पुण्यं वाऽपि देशं स मूढो
न च वयसि गरिष्ठां नापि जातिं स्मरार्तः ॥२१॥

किं ब्रवीषि ? "प्ररोहार्हाय मे केशपाशाय नाहं विषीदामि । नापि वा शीलक्षयाय । कथंभूता कनकवल्लरीत्येव मानसं मे परितप्यते" इति ।

उचितमेव स्वयं कृतानुरागायां विशिष्टः प्रेमबन्धो नाम । मूर्तित्रयकृतानुशासनो भगवाञ्शम्बरशासन एव परिपालयेद्युवतीर्युवजनं च । विस्रब्धं गच्छ । (इत्यन्यतो गत्वा ।)

केयं पुरातनमहार्हवसनपरिधाना संसेचिताङ्गारकद्युतिर्मामेवाभिवर्तते (निरूप्य ।) कथं मञ्जुभाषिण्याश्चेटी सरमा ! कुतः सत्वरमायाति । (उपसृत्य ।) अयि सरमे, अपि कुशलं मे प्रियसख्याः ?

किं ब्रवीषि ? "कुशलमेव भवादृशानामनुग्रहदृष्ट्या । देवी विज्ञापयति—अद्य किल सायं गृहोद्याने नूतनडोलाविहारः प्रवर्तिष्यते । देवेन साकं तमुत्सवमासेवितुमभिलषामि" इति । अनुगृहीतोऽस्मि । महाननुरागः किल मयि ते देव्याः । कथय तां मयि निहितप्रेमानुबन्धसदृशं संभावयामीति । भवतु, किं तत्र मदनमहोत्सवाः सदनेषु निरर्गलं प्रवर्तन्ते ?

गच्छसि युवानमधनं जरठं बधिरं च पङ्गुमूकमपि ।
पुंभावमात्रतस्त्वं रमसे रमयस्यहर्निशं सकलान् ॥२२॥

सलज्जस्मितं किं ब्रवीषि? "किमप्यविदितं नाम नास्ति भवताम्" इति। भवतु, सृष्टाऽसि चिकित्सकानां भागधेयेन। साधय मनोरथान्।

(अन्यतोऽवलोक्य।)

क एष कोलाहलः। अत्र किलाचिरसंपत्स्यमानमदनमहाहवसंसूचकबदरीलिकुचकपित्थफलोपमकुचमण्डला नवयुवत्यः कृतहस्ततालाः कलं च गायन्त्यः कन्यकामेकां मध्ये संस्थाप्य प्रदक्षिणीकुर्वन्ति। अन्याश्च प्रगल्भास्तरुण्यः संनद्धतालफलकलशमहीधराधरीकरणचतुरकुचमण्डलाश्चर्वितमधुरसुरभिताम्बूलाः परित उपविशन्त्यः समोदमनुभवन्ति नृत्यरसम्। सरसः संनाह एतासाम्।

हंसपद्मसमाकीर्णस्तटाक इव शोभते।
विचित्रकुसुमाकीर्णलतानिष्कुटवच्च सः ॥२३॥

कथमेताः सत्वरं नृत्यगीतानि समाप्य मामेव सबहुमानं पश्यन्ति। अस्तु, संभावयाम्येनाः। (इति परिक्रम्य।) सरभसमुपसृत्य सहर्षं कलभाषिणि, किं ब्रवीषि? "अद्य रमणीयेयं परिषत्तारकावलिरिव कलाधरेण" इति। स्वभावनियता किल वचसि चटुलता वनजनिदृशाम्। किमुत भवादृशां शतवारसुनीतानां वारवनितानाम्।

सिद्धेह वाचि नयने भ्रुकुटीलतिकासु वक्रता सुदृशाम्।
तारल्यमद्य चेतसि गात्रच्छविवीक्षणेषु तन्नियतम् ॥२४॥

किं ब्रवीषि? "अद्य किल कनीयसी मम कलावती कुसुमिता। ततश्च प्रवृत्तस्तदभिनन्दनविलासोऽद्य विलासिनीनाम्। भवतोऽत्र समागमः कलावत्या भाविभाग्योदयमभिव्यनक्ति" इति। नैतदुचितं नाम। यत्सा,

नूनं पञ्चशरेण पञ्चभिरहो बाणप्रसूनैरियं
लोकोन्मादकृते तु शर्वदहनप्राप्तक्रुधा निर्मिता।

अप्रौढामपि कन्यकां पुनरिमे दृष्ट्वा प्रमुह्यन्ति य-
न्मन्ये पुष्पधृतिं नवां युवजनस्योत्फुल्लभाग्योद्गतिम् ॥

किं ब्रवीषि? "आस्थायात्र ताम्बूलग्रहणेनानुग्रहणीयोऽयं जनः" इति । किमेतेन वीटिकामात्रग्रहणेन ।

स्नातामिमां तु मुग्धां सरसवचोभिर्मुदा वशीकृत्य ।
बिम्बाधरस्य पानादोष्ठं रक्तं करोमि मे नूनम् ॥२६॥

किं ब्रवीषि? धन्या बालेति । भवतु, साधयामि ।

( इत्यन्यतो गत्वा । )

क एष नवकोमलपल्लवविलसद्बकुलतरुमूलशिलातल उपविश-न्नुन्मत्त इव स्वयं प्रलपन्मोदते नितराम् ।

( निर्वर्ण्य । ) कथं मम प्रियसख एव! ( परिक्रम्य । ) अरे चन्द्रदत्त, कथमुन्मत्त इव लक्ष्यसे?

किं ब्रवीषि? "विटशेखर, अद्यैव त्वां व्यचिन्तयम् । काले किल समागतोऽसि" इति । किं मयाऽद्य करणीयं ते? किं ब्रवीषि?

सुखं दुःखं च सन्मित्रैर्विभक्तुमुचितं प्रियैः ।
एकस्य हृदये तिष्ठद्भिनत्त्येव हि मानसम् ॥२७॥ इति ।

उचितमेवैतत् । यदद्य किल तव वदनमनुपश्यन्नतर्कितेन श्रेयसा नियोजितो दैवेनेत्यनुमिमे । येन किल,

शीताश्रुवर्षि नेत्रं पुलकभरेणाकुलं च संहननम् ।
स्फुरितं च गण्डयुगलं शंसति हृदयस्थितं तोषम् ॥२८॥

( निपुणं निर्वर्ण्य । ) अहो कृतभाग्योऽसि । यतः,

वक्षोजद्वयकुङ्कुमाङ्कितमुरो गण्डोऽधरालेपन-
प्रस्निग्धः कटकावलीकिणचितस्त्वंसोऽलसे लोचने ।
पाणिर्विश्लथ एष शंसति सखे दीर्घं पुनर्यत्स्वयं
तालाकारकुचद्वयीविरचितं सद्यस्तु वीरायितम् ॥२९॥

सप्रमोदं किं ब्रवीषि? "पण्डितोऽसि मदनविद्यायां यत्प्रत्यक्षदृष्टमिव वर्णयसि वृत्तम्" इति ।

भवतु, कया नीतमिदमधिगतभागधेयं शरीरमियन्तं विपर्ययम्? किं ब्रवीषि? "दीर्घतरमिदं पुराणमिव । संग्रहेण कथयामि तावत् । आलयपूजकस्य महाशनस्य नवोढया भार्यया परिचारिकामुखेण सार्धयामात्परं निशायां गोपुरपुरोगततीर्थमरणिं समागन्तुमभिप्रार्थितः" इति ।

उचितमेव निमन्त्रणमिदम् । सा किल,

नवार्तवमहोत्सवे युवतिसंघमध्ये पुरा
  मनोजमपि साक्षिणं विदधती यथा तत्प्रसूः ।
उवाच शपथेन सा नवनवेन पुंसा पुन-
  स्त्वनाकलितसंगमा न हि शयिष्य इत्यन्वहम् ॥३०॥

किं ब्रवीषि? "मया च सत्यप्रतिज्ञेन, अनादृत्य शिवारवमविगणय्य गाढं तमस्तृणीकृत्य भुजंगवर्गं प्रलोभ्य यातुधानगणमिवास्थितं यामिकवर्गं मन्दं मन्दं गोपुरमासाद्य तस्या आगमनमाकलयन्मनस्यचिरमवसम्" इति ।

सखे, धीरतरोऽसि । ततस्ततः ।

किं ब्रवीषि? "तदा किल तटिल्लतिकेव धरणिमासन्ना सशरीरेव शशधरच्छविः शरीरद्युतिभिन्नतमोराशिरेकाकिनी ललना पार्श्वावस्थितयात्रिकगेहादागत्य परितो दृष्टिं प्रसारयन्ती सोद्वेगं चकितचकिता निवर्तितुमारभत" इति । ततस्ततः ।

किं ब्रवीषि? "अहमप्यभिसारिकां मन्वानस्तां पञ्चषट्पदान्यनुसृत्य मन्दम् 'प्रिये' इत्याह्वयम्" इति ।

सप्रमोदं वृत्तान्तः । ततस्ततः ।

किं ब्रवीषि ? "सा किल सभयं मामभिवीक्ष्यादृष्टपूर्वतया वेपमाना 'आर्य, क्षन्तुमर्हसि । सोदरं विचिन्वती समागताऽहम् । तं तु निवृत्तं मन्ये' इति वदन्त्येव गन्तुं समुद्यता" इति ।

पटव्यः किल पङ्कजाक्ष्यः । ततस्ततः ।

किं ब्रवीषि ? "अहं पुनः 'अयि प्रेयसि, किमु युक्तं नाम रजनीमध्ये मामेकमभिज्ञायापि विहाय गन्तुम् । भृशकातरश्चन्द्रदत्त इति किल घण्टाघोषः पौरेषु । अहमपि मम सोदरीमेव विचिन्वन्संचरामीतस्ततः' इत्यवोचम्" इति । पण्डितः किल परवञ्चनायाम्— ततस्ततः । किं ब्रवीषि ?

"सा क्षणमिव निपुणं मां निर्वर्ण्य कथं त्वं चन्द्रदत्तः । अरे जाल्म विटशेखर, मदनविद्यापारंगत इति श्रुतोऽसि । चिरेण त्वामधिगन्तुं यतमानाऽपि नासादयम् । दैवेनाद्य गमितोऽसीति वदन्त्येव गाढमालिङ्गन्ती कर्षन्ती सुदूरमधिगत्येदं शिलातलं पातयित्वा मामधः,

तरलनयनं ताम्यन्मध्यं तिरस्कृतभीतिकं
  चलितचिकुरं चण्डोत्कम्पाकुलाङ्गतटिल्लतम् ।
क्वणितमणितं क्लिश्यद्वक्षोजतुङ्गमहीधरं
  रभसरभसं तन्वी चक्रे तदा पुरुषायितम् ॥३१॥" इति ।

अरे धन्यस्त्वं यदनुकूलविधिरसि । ततस्ततः । किं ब्रवीषि ?

अविरतरतिकेलीश्रान्तचित्तेन्द्रिया सा
  तरुमिव नववल्ली गाढमालिङ्ग्य मेऽङ्गम् ।
चिरतरमपि सुप्ता निश्चला चञ्चलेव
  प्रणयभरवशेन प्रीतिभूम्ना च तन्वी ॥३२॥ इति ।

प्रियसख, इतः परमासादनीयं किमास्ते ?

सुरतावसानवेलाक्रान्तिभरेणाकुलां तु तन्वङ्गीम् ।
उद्वहति चेदवाप्तं यूना तज्जन्मसाफल्यम् ॥३३॥

ततस्ततः । किं ब्रवीषि?

चिरतरमपीत्थंभूते,

अरुणकिरणजालैरावृतं व्योम दृष्ट्वा
चकितचकितचेता धुन्वती दोर्लताग्रम् ।
प्रसभमपि च बन्धान्मोचयित्वाऽश्रुनेत्रा
स्खलितचरणपद्मा गच्छति सामनस्का ॥३४॥

तच्चिन्तयतो मे कम्पते शरीरम् ।

पश्यन्ती सा प्रणयपिशुनैर्दीर्घदीर्घैरपाङ्गै-
र्मन्दं मन्दं स्खलितवसनं कुर्वती च स्तनाग्रे ।
उद्युक्ताऽपि प्रलपितुमनीशा पुनर्गद्गदेन
प्रेम्णाऽऽक्रान्ता निरगमदहो केवलं त्वङ्गकेन ॥३५॥ इति ।

इदं परमसह्यतरं कुलाङ्गनानाम् । ततस्ततः । किं ब्रवीषि? "अहमपि तस्या विरहमसहमानस्त्वरितमनुसृत्य 'प्रेयसि, कथमगतिकं मां परित्यज्य गन्तासि? यत्र कुत्रापि वा निलीनौ रंस्यावहे, तिष्ठ तिष्ठ' इत्यवोचम् । सा पुनरंसे मम विन्यस्यन्ती करपल्लवं निश्वसती दीर्घम् 'हा प्रिय! अहं किल माधवदत्तस्य दुहिता कनकवल्लरी । मम पिता किल अविज्ञातनारीनिसर्गः, ऋतुमतीमपि मां न प्रादात् । चिरेण त्वामश्रौषम् । अद्यैव च संगता कृतकृत्याऽस्मि । अद्य च रात्रौ त्वामत्रैव प्रतीक्षे । स्नानाय पुनरागच्छेयुरत्र नागरिकाः । गच्छान्यतस्त्वरितम् । मुञ्च मामित एव' इति वदन्त्येव विद्रुतवती । तामेव ध्यायंस्तदेव चिन्तयंस्तद्विरहेण च परिदूयमानः प्रलपन्नहमपश्यं प्रियसखम्" इति ।

किं कनकवल्लर्येव सा! दुर्निरूपं हि विधिविलसितम् ।

घटयति फलमेकस्य प्रहरत्यन्यं विधिस्तु दुर्ललितः ।
यान्ती पुनरन्यस्मै भुक्ता भवता सुशिक्षितः सोऽयम् ॥३६॥

अरे, धन्योऽसि नवयुवतीसंगमेन। प्रतीक्षस्व दिनावसानम् ।

( इत्यन्यतो दृष्ट्वा। )

का नामेमाः परिष्कृतचिकुरविन्यस्तार्धचन्द्राकारदान्तवलयाः, लम्बमानधम्मिल्लार्धविराजमानचमरीवालसदृशकेशपाशरमणीयाः,संदर्शनीयबाहुमूलकुचपरिणाहसूक्ष्मकञ्चुकधारिण्यः, कान्तिझरगोपनभीत्यैवैकमेव कनकग्रैवेयकं दधानाः, नयननिहितकनकोपनेत्राः, प्रकोष्ठपरिकलितघटिकायन्त्राः, करलम्बितकुरङ्गचर्मभस्त्रिकाः, चरणनिहितकौशेयपदत्राणाः संघशः,

पादलम्बिसितचेलभूषिताः
पुस्तकैश्च विनिगूहितस्तनाः ।
मन्दमन्दमधरोदिताशया
अत्र यान्ति ललनाः समन्ततः ॥३७॥

( निरूप्य। ) विद्याशालामनुप्रयान्ति विशालाक्ष्यः ।

अंसे कृत्वा करकिसलयं पार्श्वगाया युवत्या
मुग्धा वामाः सरससरसं संलपन्त्यः सहर्षम् ।
विद्याशालां कुतुकरभसं संप्रयान्त्यो मनो मे
कर्षन्त्यम्भोरुहसुरभयः षट्पदानामिवालिम् ॥३८॥

एताभिः सहाध्ययनं परेण पुण्येन भाव्यं युवमाणवकानाम् । यतः,

कुचाग्रमिह संस्पृशंश्चलति संघसंघर्षितः
कदाऽपि भुजमूलमप्युपसमीक्षते सस्पृहम् ।
रहस्यपि च संलपत्यहह संशयच्छद्मना
वधूपरवशीकृतिः परमहो समभ्यस्यते ॥३९॥

कैषा सहाध्यायिनीकरग्रहणान्मोचयन्ती ममाभिमुखमायाति । ( निरूप्य । ) कथं मम वर्षमात्रकलत्रस्य कनकलतायाः कनीयसी कीरवाणी । किमियमियन्तमापन्ना वैषव्यत्यासम् ।

दृश्यन्ते न च नूपुराणि चरणे नैव प्रकोष्ठे पुनः
सप्ताष्ट ग्रथितानि हेमवलयान्यङ्गे हरिद्रारसः ।
मुक्ताचम्पकमालिकाश्च न गले चूडामणिर्वा कचे
वासः सूक्ष्मतमं च केवलमियं कान्त्या परं लक्ष्यते ॥४०॥

अपि च ।

श्वेतद्वीपसमागतललनेवेयं प्रसाधिता तरुणी ।
आजानुलम्बिवसनाऽप्यकरं परमद्य कञ्चुकं दधती ॥४१॥

अयि कीरवाणि, किं त्वयाऽप्यभ्यस्यते साधारणजनैरिव केवलमियं विद्या ?

स्त्रीत्वेनैव पिकीयं प्रलोभ्य काकीं प्रसूत इह पोतम् ।
किं विद्यया युवत्याः कुशलायाश्चापि वेशवृत्त्यां ते ॥४२॥

किं ब्रवीषि ? कथमिमां चटुलां मन्यते भवान् ? यदि द्रष्टासि पुनरध्यापयित्रीं वेत्तासि कौशलं स्त्रीणाम् ।

संलम्बिस्तनमण्डलाऽपि वसनैरारोहयन्ती दृढं
मुग्धेव प्रतिभाति विंशतितमं स्वस्या वयो वक्ति सा ।
पातिव्रत्यमनारतं समुपदिश्यासान्विटैर्गच्छति
प्रायस्ता गणिकाजनस्य नियतैर्जीवन्ति वै वर्तनैः ॥४३॥

अपि च,

अन्तर्धृत्वा कलुषकलुषं चांशुकं दीर्घरोगाः
संधार्यापि प्रतनुललितं चेलमाडम्बरेण ।
गन्धोन्मिश्रैर्वदनमुकुलं लेपयन्त्यः परागै-
र्हृत्वा चेतस्त्वबलमनसामर्जयन्त्याशु वित्तम् ॥४४॥ इति ।

तर्हि ताभिः किमिव साधयिष्यसि ? (इत्यन्यतो दृष्ट्वा ।)

कथमुपगतोऽहं वेशवाटिकाम् ।

कुसुमगन्धपरागककञ्चुलीकनककङ्कणविक्रयशालिभिः ।
अनुगृहं च गतागतलालसैः परिवृतः परवञ्चनपण्डितैः ॥

कैषा मां दृष्ट्वाऽन्तरुपयाति । (निर्वर्ण्य ।) कथं पिकभाषिणी । प्राक्तनेनाल्पागसा भृशममर्षिता । भवतु, उपसरामि । (इति परिक्रम्य ।) प्रिये, किमद्यापि ते कलुषितं मनः ?

सरोषं किं ब्रवीषि ? "गच्छ गच्छ यत्रास्ते खरकण्ठी" इति ।

(स्वगतम् ।)

व्यत्यस्तगुणगणा अपि वितरन्त्योऽङ्गानि विटनटानां च ।
रोषामर्षादिगुणैरनुकुर्वन्त्येव किं सतीं वेश्याः ॥४६॥

(प्रकाशम् ।) प्रिये, किमल्पोऽप्यनल्पीक्रियते भवत्या ।

किं ब्रवीषि ? सा किल बहुमता भवतः । किमत्र वृथा संलापेन । गच्छ यथेष्टमिति ।

(स्वगतम् ।) धर्मसंकटे किल नियोजितवान्पुरा, प्रियसखः शृङ्गारभूषणः ।

घण्टामेकां कनककलितां मेखलायां निबध्य
प्रौढा या वा निधुवनकृतौ ते तु धीरस्य जेत्री ।
दातव्येति प्रथममदिशत्सा पुनर्मद्विजेत्री
दत्तायां किं कलुषितमनाः कुप्यति मामेषा ॥४७॥

(प्रकाशम् ।) प्रिये, त्वयाऽपि किल बहुशः प्रयतितं पणलाभाय । तया पुनः कलकण्ठ्या साधितम् । किं मयि कोपेन ? भवतु, अनन्तरं पश्यामि ।

( इत्यन्यतो गत्वा। )

कैषा गृहालिन्दे हस्ते कपोलमावेश्य ध्यायन्तीव लक्ष्यते। ( निरूप्य। ) मञ्जुवदना किलैषा। ( परिक्रम्य। ) अपि कुशलम्? किं ब्रवीषि? "कथं कुशलमपि मन्दभाग्यायाः" इति।

( स्वगतम्। ) कस्येयमद्य कामिनी। आः स्मृतम्! कनकमित्रेण मासत्रयं कलत्रीकृता। ( प्रकाशम्। ) किं कनकमित्रेण यथापत्रं दातव्यं न दीयते? सविषादं किं ब्रवीषि? "किं सर्वेऽपि शृङ्गारशेखराः? न केवलं दातव्यं न दीयते। कमलमित्रेणान्यैश्च दत्तान्यप्यपहृतानि" इति। अरे जाल्म, किं मञ्जुवदनायामपि ते दौरात्म्यं दर्शयसि? शृणु तेन पुरा कृतम्।

दीनारं द्विशताधिकं दद इति प्रोच्य प्रतिज्ञामयं
कल्याणीं स तु मासमेकमददाद्भुक्त्वा पुनर्दीर्घशः।
दास्यत्यद्य परश्व इत्यहरहः सा तु प्रतीक्षान्विता
नादादेष तु काचमप्यहह संभुज्यापि मासान्दश ॥४८॥

किं ब्रवीषि? "नाजानामेतावतेममुदन्तम्। ततस्ततः" इति।

राकाभार्गववासरोऽयमिति वै यामत्रयान्तं पुनः
कृत्वा केलिचयान्स वञ्चकमणिः प्रास्वापयत्तां शनैः।
क्लान्ता सा तु तपस्विनी रतिभरश्रान्ता प्रसुप्ता दृढं
हृत्वा सर्वमहो कलापनिचयं दुद्राव पापाग्रणीः ॥४९॥

किं ब्रवीषि? "हन्त किं कल्याण्यपि तेन मुण्डिता? ततस्ततः" इति। ततः किम्? सर्वस्वमपि दत्त्वा सा पुनः काचाय करमुन्नमयन्ती चरति। भवतु, कथय ते कथाम्! किं ब्रवीषि?

रूप्यसहस्रं दास्ये प्रतिमासमिति प्रलोभ्य भुक्ताऽहम्।
वस्त्रयुगलं च नूतनं कञ्चुकषट्कं च हेमतन्तुकृतम् ॥ इति।

वचनेष्वपि किं दरिद्रता । भवतु, जरत्याऽपि न किमयं रूप्याय नियन्त्रितः ?

किं ब्रवीषि ? "जरती किमिमं विजहाति । प्राप्तमात्रमेनमेष शार्दूलीव भृशं तुदन्त्यासीत्" इति ।

ततः कुतो वा स मोचितः ? किं ब्रवीषि ? "जरत्या यात नामसहमानः पञ्चदशदिनेभ्यः परमयमेकामनर्घां कनकचम्पक मालिकां मरकतमणिग्रैवेयकं च प्रादात्" इति ।

जरत्याः परमो मोदः स्यात् । ततस्ततः ।

किं ब्रवीषि ? न केवलं वृद्धा, अहमपि मुदमपारामाप्त्वाऽकरवमिममपि विस्रम्भभाजनम्" इति । ततस्ततः ।

किं ब्रवीषि ? "एकदा किल रात्र्यां चिरादुपागत्य 'भूषणद्वयमपि धनागारस्य निक्षिप्तम् । तदद्यैव स्थापयितव्यं तत्र । अतः प्रदेहि' इति निर्बन्ध" इति ।

किं वृद्धपिशाचिकाऽपि तमन्वमन्यत ?

किं ब्रवीषि ? "जरत्याः सविधेऽपि किमयमोजायेत ? तया क्षणेन निष्कासितः" इति । उचितमेवैतत् । ततस्ततः ।

किं ब्रवीषि ? "महता कोपेन गतः स पञ्चघटिकायाः परमागत्य बहिःकपाटं बलवदताडयत् । अन्तरुपविष्टया जरत्या कुत्सितोऽपि बहुधा न निरगात् । अनुकम्पावशेन मया कपाटेऽपावृते द्वित्रैः समं सरभसं प्रविश्य वैद्युतं दीपमुज्ज्वलयन्करस्थम्, संदर्श्य कृपाणं तद्दत्तमाभरणद्वयमन्यदत्तान्यपि बहुशो बहुधा भूषणानि चापहृत्य क्षणादन्तर्दधे," इति ।

अहो नृशंसता विटजनस्य ।

दयनीयासु पिशाचैरपि किं क्रौर्यं चरन्ति ते पापाः ।
विषमा वामा इति तु प्रथयन्त्येते कथं मर्त्याः ॥५१॥

ततस्ततः ।

किं ब्रवीषि? "यो वा समागमिष्यतीति पश्यन्ती परितो वसामि" इति । भवतु, श्वः पुनरनर्घया कनकमणिमालिकया त्वां योजयिष्यामि ।

( इत्यन्यतो दृष्ट्वा । )

कथं मम प्रियसखी सौधमुखमधिवसन्ती नखमुखैः कुन्तलभरमालिखन्ती तिष्ठति । (परिक्रम्य ।) अयि सरसवाणि, अपि कुशलम्?

किं ब्रवीषि? "कितव मन्दं वद । संनिहिता वृद्धा । भुजंगश्रुतिः श्रोष्यति" इति । सत्यं भुजंग्य एव जरत्यः ।

यथा भुजंग्यः फणधारिरत्ना उद्वेजयन्तीह परान्प्रकामम् ।
एता जरत्यः स्वसुताप्रवालपार्श्वे वलन्त्यः परितर्जयन्ति ॥

अपि जरती न मर्तुकामा? अथ व्यसरद्वा प्रेतपतिः । सोत्स्मयं किं ब्रवीषि? "किमर्थं तां मृतां कामयसे?" इति ।

प्रिये,

धनमेव काङ्क्षमाणा गमयति धनिनोऽपि रोगिणो वृद्धान् ।
न च पश्यति सा यूनो निधुवनकुशलांश्च मन्मथाकारान् ॥

किं ब्रवीषि? "गच्छ त्वरितम् । पश्यति चेद्देयाय तुदेन्मासिकधनाय" इति । युक्तमेव,

भुक्ता पुनस्तु तन्वी मासत्रयमप्यनङ्गकुशला सा ।
दातव्याय तुदन्त्यां मार्जार इवाहमद्रवं मौनी ॥५४॥

भवतु, किं स्मरसि तान्दिवसान्?

अहर्निशविभावनाविधुरमानसौ संततं
व्यवायकुशलौ पुनः सुदृढबद्धरागोत्कटौ ।
प्रनष्टतिलकावलीप्रचुरसंस्रवत्स्वेदकौ
पुरा ह्यकलयाव ता नवनवाश्च केलीर्मुहुः ॥५५॥

सलज्जं किं ब्रवीषि? दीर्घकालादपि त्वयैव मनसि धृतमिदं सकलमिति । भवतु, अचिरेणैव जरतीरहितां त्वां पश्यामि ।

(इत्यन्यतो गत्वा ।)

कैषा करकलितचित्रातपत्रा समायाति । (निर्वर्ण्य ।) कथं मुकुलमालिका! किं कुशलिन्यसि?

धर धवलवसनमार्ये चूचुकमात्रस्य किं नु कञ्चुल्या ।
अलमिह पुंभावस्याप्यङ्कुरितं ते मुखे श्मश्रु ॥५६॥

किं ब्रवीषि? "दुष्टवराक, किं प्रहिणोषि वाग्वज्रं मय्यपि साहसिन्याम् । जाने स्त्रीवेषेण पर्यटन्तं त्वाम्" इति ।

अयि शुष्कस्तनि! किं त्वया सत्यं दृष्टः ।

किं ब्रवीषि? "जाने देव जाने ।

कृत्वा वक्षसि नालिकेरशकलं बद्धं दृढं कञ्चुके-
र्धृत्वा चित्रितमंशुकं लघुकचं संगोपयन्वाससा ।
भोक्तुं तां रजनीषु यावनसुतां पुंभिस्त्वदृश्यां परै-
र्गच्छंस्त्वं शतवारमप्यहह रे दृष्टोऽसि पापाधम ॥५७॥

अरे वैधवेय, भवतु, तव दुर्वृत्तं यातुधानाय तस्मै निवेद्य प्रतिकरिष्यामि" इति ।

अयि दुष्टचारिणि, किं वनजम्बुको बिभेति चञ्चलशब्दतः ।

अहमपि तस्य चेष्टितं द्वितीयगृहिणीरहःसमुपभोगं तत्सेव्याय हेमगुप्ताय प्रथममाख्याय तव भर्तरि च तेऽपदानानि संलप्य यथागतं गच्छामि ।

सभयं किं ब्रवीषि? "किं मय्यपि किंवदन्ती जनानाम्?" इति। किं जन्मभवनमाहात्म्यं सोदर एव दर्शयसि। अरहस्यानि ते शीलवृत्तानि।

कृच्छ्रादेव गृहादवश्यकृतये निर्गच्छसि प्रत्यहं
दृष्टिं पादतले निवेश्य सभयं यासीह पुंसां पुरः।
ब्रूषे कृच्छ्रतरेण वामनयनापृष्टा परं भाषितं
दृष्ट्वा काकमपि प्रभूतनिनदं नूनं बिभेषि स्वयम् ॥५८॥

किं ब्रवीषि? "तत्कथं मयि वचनीयतालेशस्यापि संभवः" इति। भवतु,

संगोपितमपि वृत्तं स्त्रीणामाकाशमुद्वयेत्तैव।
धूम इव सिक्तकाष्ठगवह्नेर्लशुनस्य पूतिगन्ध इव ॥५९॥

शृणु ते पुण्यवृत्तं यावदहं जानामि।

मल्लीवर्धनमेत्य गूढरमणं नीतं तु वर्षद्वयं
नीतो वर्ष इह प्रभूतधनिभिर्जातिव्यवस्थां विना।
पञ्चत्वं स च यापितो दमनको लब्ध्वाऽपि पञ्चायुतं
ह्यद्य त्वं स्थविरं शिखण्डिवणिजं यान्ती परं निर्वृता ॥

किं ब्रवीषि? "सत्यमेव वदन्ति वेदान्तिनः प्रपञ्चोऽयं मिथ्यामय इति। यन्मय्यप्येतादृशी जनश्रुतिः" इति।

अयि, किमर्थं गोपयसि? सृष्टाऽसि विधिना तस्यैव गूढभार्या। यतः।

वक्षोजभारमपहृत्य तवानताङ्ग्या-
स्तस्योदरे निहितवान्कमलासनोऽयम्।
तस्योत्तमाङ्गमतुलं पलितं विधाय
षट्सप्तगौरचिकुराणि तवैव शीर्षे ॥६१॥

किं ब्रवीषि? "किं यथार्थं मन्यते देवो मिथ्याप्रसारितमिममुदन्तमपि" इति ।

भवतु, का हानिः । (इत्यन्यतः परिक्रम्य ।)

क एष महाञ्शब्दो निदाघस्तनितमिव भूतलं कम्पयन्नावृणोति कर्णयुगलम् । (निरूप्य ।) कथं बृहदीश्वरः प्रातरुत्सवाय वीथीमलंकरोति । तत एवायं कोलाहलो नागरिकाणाम् । (सादरं पश्यन् ।)

निमेषक्रोधोऽसौ रभसरभसं शम्बररिपुं
निहत्यार्यां कामादहह निजवामे कलितवान् ।
ततः प्रायश्चित्तं रचयितुमिवाभीरतरुणीं
सहस्राक्षापत्यं च स हि विदधे सूनुललने ॥६२॥

किमेते बालका ग्रामीणाश्चासमावृतवदनाः साश्चर्यं पश्यन्ति । भवतु, पश्यामि । अहो!

क्वणड्डमरुमर्दलप्रचुरनिःस्वनप्रस्फुरद्-
द्रुतादिगतिभेदसंकलितपादविन्यासकम् ।
मृषाचरणवाजिनं मुकुरखण्डिकामण्डितं
स्वलंकृतनरेरितं सकुतुकं प्रपश्यन्ति ते ॥६३॥

(अन्यतो दृष्ट्वा ।) किमेते युवानश्चपलाश्च वृद्धाः परिवृत्य तिष्ठन्तः समुन्मीलितनयनाः पश्यन्ति । (उपसृत्य ।) आः! अत्र किल प्रवर्तते नाट्यम् । अनङ्गलता किलाभिनयति ।

दृढं बद्ध्वा चेलं पदयुगलशिञ्जन्मणिगणा
प्रगायन्ती मन्दं सुषिरपणवातोद्यमधुरम् ।
करौ तत्तद्भावानुगुणमधरीकृत्य चतुरा
भ्रुवा नेत्रेणापि प्रथयति परं भावमखिलम् ॥६४॥

(निरूप्य ।) कथमेकान्तवाससुखमनुभवति भगवान्बृहदीश्वरः ।

परिवार्य वारवनितां परितस्तिष्ठन्ति सादरं तरुणाः ।
पलितकचा जरितमुखाः पुत्रैर्बालैश्च मुग्धवनिताभिः ॥

किमत्र तरुण्यः सवयोभिः साकमङ्गुलीर्निर्दिश्य सोत्साहं संलपन्ति ।

अर्धावगुण्डितशिरोरुहरम्यवक्त्राः
संदर्शनीयतरकच्छनितम्बभागाः ।
हस्तार्धसंकलितकञ्चुकभूषणैश्च
दृश्यास्तु गूर्जरयुवत्य इहावभान्ति ॥६६॥

( अन्यतो विलोक्य । )

एताः पन्नगभोगसोदरतुलाकोटित्रयाभूषिताः
संसिक्तान्कनकेन पञ्च कटकान्संधारयन्त्यः करे ।
आपाश्वावृतदृश्यकच्छवसनाः फालस्फुरत्कुङ्कुमाः
संदृश्यस्तनमण्डलाकलितसंव्यानाः किलान्ध्राङ्गनाः ॥

( अन्यतो दृष्ट्वा । ) दृष्टेरिदमामिषम् ।

धवलवसनमेकं धारयन्ती नितम्बे
वसनमपि च सूक्ष्मं हाटकान्तं कुचान्ते ।
प्रसृतकचकलापा जानुनि स्वर्णकान्ति-
र्वितरति मम मोदं केरली केलिधीरा ॥६८॥

( अन्यतो गत्वा । )

चेलं महार्घं पुनरादधानाश्चोलाङ्गनाश्चित्रमटन्ति पार्श्वे ।
शिरोरुहाभावनिगूहनार्थं धरन्ति ये पुच्छमहो चमर्याः ॥

कथं क्षणत एव सुदूरं गतः परमेश्वरः । ( निर्वर्ण्य । )

नभोमध्यमारूढो दिनमणिः ।

सेवन्ते तरुकोटरं परभृताः स्वस्वाङ्गनाभिः समं
खादन्तो नवशाद्वलं च हरिणाः शीतं परं निष्कुटम् ।
नूनं नृत्यकलामिह प्रथयितुं न्यग्रोधकं केकिनः
संकेतं कुलटाः समीरणसुखास्वादस्य च च्छद्मना ॥७०॥

अतो देवालयपरिसरगतमुपवनमधिष्ठाय तपनातपखेदमपोहयिष्ये ।

( इत्युपवनप्रवेशं नाटयित्वा । )

( सुखमभिनीय । ) सरसोऽयमभिनिवेशः ।

नीरन्ध्रद्रुमशीतलो निधुवनक्रीडानिकुञ्जावृतो
निष्यन्दामृतपानमत्तमधुपव्यूहारवालंकृतः ।
निःसीमोत्थितफुल्लमल्लिकुसुमामोदाहरन्मारुतो
नूनं निष्कुट एष नन्दननिभो मां नन्दयत्यन्वहम् ॥७१॥

( पार्श्वतो दृष्ट्वा । )

शीतश्वेतजलाशयः पुनरयं शीतांशुधारारुचिः
शालीनेक्षणकामिनीविरहहृत्तापव्यपोहक्षमः ।
शिल्पाकल्पसमुच्चयाकलितसत्पद्याभिराभूषितः
शान्तं मे हृदयं करोति शशभृद्वक्त्राभितप्तस्य च ॥७२॥

क एषः !

स्वेदक्लिन्नशरीरः सीत्कारेण व्यपोहयंस्तापम् ।
आयाति गूहिताङ्गः कोमलगात्रः करात्तकरवालः ॥७३॥

कथं स्यमन्तक एव ? अहो, दिष्ट्या त्वां कुशलिनमवलोकये ।

राजन्यकुलवामाक्ष्यां यत्त्वं व्याप्रियसे दृढम् ।
अवेहि तत्त्वदन्ताय विषमिश्रं यथाऽऽमिषम् ॥७४॥

किं ब्रवीषि ? "राजन्यो वा स भवतु ! उत वा स्वयं राजा । किं कुर्यात्स कृपाणपाणिमपि च हरिणप्लुतेन पलायमानम्" इति । भवतु, राजन्यगृहेष्वेव निशीथे स्थितं वयस्येन ?

किं ब्रवीषि ? न हि न हि । चिरमपि रात्र्यां द्वियामावधि परिसरवकुलोद्याने तिष्ठन्नपि यथा संकेतितं यदा तां नाध्यगच्छं दीनमनाः प्रतिनिवृत्तः । इतिकर्तव्यतामूढमनसि मन्दं मन्दमुपयियासति मयि, शिवालयस्य परिसरे एका किल तरुणी गाढान्धकारे तिष्ठन्ती मां दृष्ट्वा 'आर्य यत्किंचित्किल मद्गृहमागत्य भवद्भिरुपकर्तव्यम्' इत्यभाणीत् । परिद्यूनां तां दृष्ट्वा दयमानहृदयः किं कर्तव्यमिति पृच्छन्नेव परिसर एव तद्गृहमासादयम् । तत्र किल ललनेयं निर्मनुजे गृहेऽन्तर्गृहमानाय्य,

भृशमपि परितुष्टा नूतनाप्तेन यूना
परवशहृदया मां पातयित्वा च तल्पे ।
अरचयदथ केलीः प्राप्तपुंभावशीला
प्रबलतरशरीरा कामुकी केलिधीरा ॥७५॥

रसवदिदं वृत्तम् । ततस्ततः ।

किं ब्रवीषि ? "चिरेणाप्यपूर्णकामा मां वीक्ष्य खिन्ना पतिसमागमकालोऽयं गच्छ त्वरितमित्याभाष्य करेण मां संगृह्य 'प्रिय, श्वो निश्चयवश्यमागन्तव्यम्, कदाऽपि न विस्मरणीयमिदं महाशनद्विजस्य गृहमिति पुनः पुनः प्रार्थयन्ती आगृहद्वारमनुगम्य विसर्जयामास । अहमपि निशामेव प्रतीक्षमाणो यत्र कुत्रापि संचरन्प्रियसखमद्याद्राक्षम्" इति । सखे, तस्यां पिशाचिकायां किमु लग्नोऽसि । अतिविस्मयनीयोऽसि यत्त्वं सप्राणो विमुक्तः ।

किं ब्रवीषि ? कया निर्वृतो वयस्यो ह्यो निशीति ।

सखे, व्रणे किल तप्तसूचीमाम्रेडयसि ।

किं ब्रवीषि? "कथं वयस्यो भृशं खिन्न इव" इति।

अवधेह्युदन्तम्। द्वित्रदिनेभ्यः किल पूर्वं सकलभुवनमण्डलमण्डनायमानं काञ्चीनगरं विषधराशनवाहनं वरदराजमासेवितुकाम उपयातः।

किं ब्रवीषि? अरे कितव, किं भगवति निरर्गला भक्तिर्निरगलत्ते हृदयकोशात्।

विन्दन्ति देवं गरुडाधिरूढं संद्रष्टुकामा इव पत्तनं तत्।

गच्छन्ति नूनं मधुपानमत्ता मुग्धाङ्गना एव तदुत्सवेषु॥ इति।

भवतु, यथेष्टं मन्यस्व। प्रयात एव च मयि, अस्तशिखरशेखरीभूते सवितरि, महोत्सवदर्शनागतनानानगरनरनारीमणिभिरावृतासु नगरवीथीषु दीप्यमानैः शतसाहस्रकैर्वैद्युतदीपैस्तारागणालंकृते नभोमण्डल इव विराजमाने भुवनमण्डले, क्रयविक्रयणच्छलेन संघसंघशः सर्वतः समलंकृत्य संचरत्सु प्रमदाजनेषु, तदीक्षणमार्गपरेषु द्वित्रिशोऽनुगच्छत्सु युवजनेषु, संकेततलनिश्चयव्यापृतेषु पूर्वपरिचितेषु, नवपरिचयाय विटसार्वभौमेषु वीक्षणवागुरां सृजन्तीषु वक्षोजशालिनीषु, नवयुवतीषु नयनाय नवागताऽनानानागरजनं मृगयमाणासु दूतिकासु, वाणिज्यव्याजेन विपणिमुखमागत्य विविधमालपन्तीर्वारवनिताः सादरं वाचालयत्सु वयःस्थपण्यानुजीविषु, दिक्षु विक्षिपन्नक्षियुगलमनतिरभसमहमचरम्।

किं ब्रवीषि? "युक्तमेवैतत्। तत्रैव किल सर्वमुपनतं भवति। ततस्ततः" इति।

तदा किल,

मुग्धा वामा मदनधनुषो विच्युतेवेषुरागा-
न्मन्दं मन्दं मधुकरकचाक्लृप्तचित्रप्रसूना।
पश्यन्तो यां परवशहृदः पार्श्वभागे युवानो
याता यादःपतिसमजनव्यूहमध्याभिसंस्थाः॥७७॥

किं ब्रवीषि ? ततस्ततः इति ।

नैकव्याजानुयायिविटजनानुकर्षणक्लान्तेव मन्दं विन्यस्यन्ती चरणे मदन्तिकमुपागता क्षणमिव मां निर्वर्ण्य सानुरागमीक्षमाणा पदगलितमिव नूपुरं समीकुर्वन्ती तस्थौ ।

किं ब्रवीषि ? स एव किल सारसाक्षीणां छलविलम्बनप्रकारः। ततस्ततः । अहमपि तदीयस्मितवदनसरोजवीक्षणमात्रेण क्षणमविज्ञातशरीरो विस्मरन्प्रपञ्चं विभावयंस्तन्मुखमण्डलमेव सकलमपि कुवलयमतिष्ठम् ।

किं ब्रवीषि ? दर्शनादेव कुसुमितानुरागौ जम्पती ! ततस्तत इति ।

चिरेणापि प्रतिष्ठामापन्नः पतिबन्धुजनपरिवृतामालक्ष्य खिन्नहृदय इतिकर्तव्यताविमूढस्तन्निहितदृष्टिरभवम् ।

किं ब्रवीषि ? पतिबन्धुजनाः परमतिमात्रं पङ्कजाक्षीहरिणतीनां पञ्चास्या एव । ततस्तत इति ।

सा तु मामेव सस्पृहमवलोकयन्त्यपि पतिजनसमाहूता प्रस्थिता । क्षणेन निर्वापिते वै ुते दीपनिचय इवान्धकारमग्नमखिलकुवलयमाकलयताऽन्वगामि मया च । तादृशं च मामुपलक्ष्य स्वावासमावेदयन्तीवासकृदभिवीक्षमाणा द्वित्रवीथीरतिक्रम्य स्वगृहद्वारमुपेत्यान्तराविष्टेषु सहानुयायिषु व्याजेन दूरादुपस्थितं माम्,

वृषभ चर यथेष्टं पत्तने वा स्वतन्त्रो
वस कितव भुजङ्गादर्शितो निष्कुटे वा ।
इह किल निशि मध्ये कंधरे बन्धयिष्ये
करकिसलयरज्जुं शाद्वलासेवनाय ॥७८॥

इति वदन्त्येव बलवदाह्वानरवमाश्रुत्य ससंभ्रममन्तर्गता ।

किं ब्रवीषि ? अन्यादृशमेव कौशलं कामिनीनामिति ।

अहमपि तद्भावं विज्ञाय सुचिरं वलमानोऽपि तद्गृहवलय-मनासन्नसुन्दरीदर्शनः प्रतिनिवृत्य पण्यवीथिकां तद्गतमनाश्चिरमपि परिभ्रमन्यामान्त एव तद्गृहपार्श्वमुपरुध्य यावदवालोकयं तावता।

स्यालादयस्तदीया दीपयुताः संलपन्ति सवयोभिः।
संकृत्यमानहृदयस्त्वशपं तान्प्राणनाशाय ॥७९॥

सहासं किं ब्रवीषि? मन्ये भस्मीभूतानस्मत्प्रियसखशापा-नलेन तान्। ततस्तत इति।

अल्पायुषस्ते प्रलपितमेव प्रलपन्तोऽपि अस्मृतकालात्ययाः सुचिरमप्यासन्। मनस्तु मे त्वरयति, माद्यति, खिद्यति, शीर्यते इव, म्लायते च। किमु हन्यामेतानित्यप्यालोचयम्। चिरेण किल ते पापिनः प्राप्तखेदाः प्रलापेन निर्वाप्य दीपं प्रस्थिताः शयनागारम्।

अहमपि गृहद्वाराभिमुखो मूषकशब्दमपि मञ्जुवदनाया नूपुरशब्दमभिमन्वानः सोत्कण्ठं प्रतीक्षमाणोऽवतस्थे। चिरमित्थं भूतेऽपि नागता सा तरुणी। नूनं प्रलोभितवतीत्यचिन्तयम्।

किं ब्रवीषि? नैतदुचितं नाम भारतीयरमणीषु। वैदेशिकीनां किल सा प्रकृतिर्यत्तरुणान्प्रियवचनैः परं वशीकृत्य वैद्युतयानेषु समारोप्य समानीय सुदूरं व्याजेन पुनर्दुर्गतरे मार्गेऽवतार्य सहस्ततालमपहसन्त्यः प्रलोभ्य गच्छन्तीति। ततस्ततः इति।

ततः किल कपाटापावरणं श्रुत्वा संविग्नहृदये मयि वीक्षमाणे सा किल मन्दं विन्यस्यन्ती चरणे सचकितमभितः पश्यन्ती गृहालिन्दाद्बहिरायात्। अहमपि सकौतुकं तदुन्मुखीभूय प्रिये इत्याह्वयम्। सा पुनः "मानद, रसालतरुमूले निलीय मामेव परिकाङ्क्षमाणं वातायनमार्गेण भवन्तं चिरेणाप्यपश्यम्। किं क्रियतां दीनया? नायमवसरः प्रलपितुम्। पतिरसुप्तो वर्तते। श्वः

पुनरहं मम कनीयस्या आर्तवमहोत्सवाय तञ्जानगरमासादयिष्ये" इति वदन्त्येवाश्रूण्यवर्षत् । श्रुत्वा दीनां वाचमस्या दृष्ट्वा च परिम्लानं मुखपङ्करुहं भृशं परिद्यूनः "प्रिये मा शुचः । तञ्जानगरमेव मम जन्मभुवनम् । नूनं त्वां श्वो द्रष्टासि ।" इत्यभिदधे । सा किल परितुष्टा हस्तेन मामालम्ब्य "प्रिय महासदनवीथिकायां नन्दगुप्तवणिजो गेहे..................इत्यर्धोक्त एवान्तरुद्गतेन शब्देन भीतभीता विद्रुतवती ।

किं ब्रवीषि? पतिगृहवासो नाम परमसंकटावहः पङ्कजाक्षीणाम् । ततस्ततः इति ।

हस्तस्पर्शसमुद्गतपुलकेनाहं भृशं तु तुष्टोऽपि ।
सर्वस्वनाशमेत्येवाहो कृपणो व्यषीदमुद्भ्रान्तः ॥८०॥

चिरतरमपि तदागमनमभिकाङ्क्षमाणो रसालमूल एव स्थितः, उदयगिरिमारोहति भास्वति निखिलनिशाजागरेण परिक्लान्तः, मन्दं मन्दमुत्थाय तद्दिदृक्षातुर इत एवाभ्यवर्ते ।

किं ब्रवीषि? साहसी किल प्रियसुहृत् । ततस्ततः ।

तदापणिकगृहमार्तवमहोत्सवं च विज्ञाय भृशं परितुष्टोऽभिमुखगृहं चिरमधिवसतोऽपि बहुजनसंकुले सा न दृष्टिपथमधिगता । ततस्तु निशामुखे मन्दं मन्दमन्धकारेणावृते नभसि गवाक्षान्तरुत्स्मयमाना, यामार्धे पार्श्वनिष्कुटमासादयितुमादिदेश हस्ताक्षेपेण ।

किं ब्रवीषि? कुशलिनी किल कमलाक्षी । ततस्ततः इति ।

अहमपि पर्यन्तोद्यानमासाद्य, सुदीर्घमपि कालं वृक्षमूलेष्वेव निलीय सर्वतश्चारयंश्चक्षुरभवम् । तदा किल तिरस्कुर्वती तरुणज्योत्स्निकामुत्स्मयेनैव परितर्जयन्तीव चकोराङ्गना नूपुररवेणैव गृहाराममासादितवती । तद्दर्शनमात्रेणैव प्रकम्पितजानुः सद्यः संविग्नहृदयकमलः स्वेदक्लिन्नसर्वाङ्गः स्तब्ध इव मूक इवोन्मत्त इव संवृत्तः ।

क्षणेन धैर्यमालम्ब्य स्मितमुखाम्बुजमवलोक्य करेण करपल्लवमालम्ब्य पार्श्वावस्थितपुंनागतरुमूलशिलातलमुपसृत्य,

ऊरौ कृत्वा निवेशं घनकुचकलशेनादरात्पीडयन्तीं
मन्दस्मेराम्बुजास्यां मम गलनिहिताशोकवल्लीप्रवेष्टाम् ।
प्रेम्णा वाचः प्रकुर्वन्नहह किल निशां व्यर्थमेवानयं तां
नापि स्पृष्टं स्तनाग्रं रसित इह न तद्बिम्बदन्तच्छदो वा ॥

इत्थमेव मूढे प्रलपति मयि सुदीर्घमुत्थाय सरभसमेषा ।

उदयति सहस्रकिरणस्त्विति सा हस्तौ विधून्वती भीत्या ।
अश्रूणि वर्तयन्ती विमनास्त्वरितं गृहाङ्गणं याता ॥८२॥

किं ब्रवीषि ? अहो दुर्विनीतता विधेः ! इति

अहमपि दुर्लभपुनःसमागमां निश्चिन्वन्ध्यायमानरमणीमुखाम्बुजः, स्मर्यमाणकामिनीवचनमाधुर्यः, तामेव दिदृक्षमाणः पर्यटन्वयस्यमद्राक्षम् ॥

किं ब्रवीषि ? "चतुरा एव प्रायो मूढा भवन्त्युपस्थिते कार्ये । भवतु, तामद्य निशायामेव योजयिष्यामि" इति ।

कथं नाम साध्यं भविष्यति शताधिकपतिगृहजनमध्यगतां तामानेतुम् ।

किं ब्रवीषि ? किं जानासि पुंश्चलीनां परममुपकारं करोति पटनाट्यमिति । कथमिव ?

किं ब्रवीषि ?

प्रतार्य पतिमङ्गनाः पटविलासकच्छद्मना
प्रयान्ति बहिरेव ता नटविटान्समासादितुम् ।
चिरं समुपभुज्य तान्कलुषितेक्षणाश्चालसा
गदन्ति धवमन्ततः पटविलाससंभावितम् ॥८३॥

शृणु चापरं चेष्टितं तासाम् । एताः किल वृषस्यन्त्यः छाया दर्शिनीनटिका इव परिभूषयन्त्यः तिरस्करिणिकारुद्धेषु विविक्तेष्वासनेषु संकेतितेन जारपतिना सममुपविशन्त्यः, निर्वापितेषु दीपेषु मन्दान्धकारेण मलीमसेषु मण्डपेषु निर्निमेषं नटनं पश्यत्सु नाट्यरसिकेषु,

संलप्य भूरि विविधाश्च कथाः पुराणाः
प्रेमानुबद्धहृदया कृतकण्ठहस्तम् ।
आलिङ्गयत्यथ विचुम्बति केलिलोला
बिम्बाधरं कुचतटे कृतहस्तकस्य ॥८४॥ इति ।

भवतु, कथं तां समानेष्यसि पटनाट्यव्याजेन वा ?

सहासं किं ब्रवीषि ? विटसार्वभौम इति नाम संप्राप्यापि कथमिदमप्यविदितं ते ?

गृहमार्जनकारिण्यः प्रायः कुर्वन्ति दूतिकावृत्तिम् ।
तण्डुलमपि तैलादीन्रहसि लभन्ते च येन कुलवध्वाः ॥ इति

विचक्षणोऽसि वश्यविद्यायाम् । कथं वा वशीकुर्वन्ति कुलयोषितामपि मानसमेताः सेविकाललनाः ?

किं ब्रवीषि ?

दारिद्र्येण निपीडितां धनचयैर्मुग्धां च चाटूक्तिभि-
र्वीरां कामकलासु धीरपुरुषं संयोजयन्त्यः स्वयम् ।
पुत्र्यास्तूद्भवकारणेन तनयाहीनां चिरायाङ्गनां
तोकौघाकुलितां त्वपुत्रजनकं ख्यात्वा वशीकुर्वते ॥ इति ।

प्रियसख, सिंचन्तीव सुधारसं तव वचनाक्षराणि । निशामुख एव यदि सा नासादिता, न सप्राणमेनं जनं द्रक्ष्यसि । यतः,

वायुः कालदिशः किरत्यसदृशं गन्धद्रुमाहेर्विषं
शीतांशुर्मयि वर्षतीव शकलाञ्शंभुत्रिनेत्रोद्गतान् ।
सूच्या वेधयतीव कोकिलगणः कूजन्स्वरं पञ्चमं
हृत्तापज्वलनं प्रदीपयति मे चञ्चत्प्रसूना लता ॥८७॥

किं ब्रवीषि ? मा शुचः, नूनं त्वामत्रैव लतागृहे रजनीमुख एव तया योजयिष्ये, अनुमन्यस्व दूतिकां प्रेषयितुम् । इति । साधय यावद्दिनावसानं कृच्छ्रेण प्राणान्धारयिष्ये । कथं स त्वरितं प्रस्थित एव । नूनमेष साधयिष्यति मे मनोरथम् । ( आकाशं निरूप्य । ) सह्यातपस्तपनः ।

नवधनमवाप्य धूर्तः साधून्संक्लिश्य वित्तमदमत्तः ।
विरते कोशे कोमलशील इवायं चकास्ति दिननाथः ॥८८॥

भवतु, कुत्र वा समेत्य विनोदयिष्ये मदिराक्षीकामुकं मानसम् । ( स्मृतिमभिनीय । ) आः स्मृतं मञ्जुभाषिण्या किल दूतीमुखेन डोलाविहाराय सायमभिप्रार्थितः । तत्रैव गत्वा मानसं परितोषयिष्ये ( इति परिक्रम्य । ) पण्यवीथिकां खल्वुपगतोऽहम् । कैषा चेलापणमुखमधितिष्ठन्ती कलहायते विपणिगतेन साकम् । भवतु, पृच्छामि—( इति परिक्रम्य । ) कथं कमलवदनैव ! प्रिये,

चतुरा रतिकलहेष्विति पूर्वं विदिताऽसि मे तन्वी ।
दृष्टा पुनरद्यैव प्रथिता क्रयवचनकलहे च ॥८९॥

किं ब्रवीषि ? "प्रकृतिरेव यूनां युवजनपक्षसमाश्रयणं नाम" इति । अयि कमलवदने, किं शृङ्गारशेखरेऽपि युवतिजनविरोधभावतामारोपयसि । आः कष्टं यच्छ्रुतं प्रियसख्या मुखादपि घोरतरं वचनम् ।

किं ब्रवीषि ? क्षमस्व । व्यवहारः कश्चित्प्रियसखेन निर्णेय इति । कथमिव ?

किं ब्रवीषि ? " एष किलापणिको ह्य एव पट्टचेलमिदमपुराणं प्रतिज्ञाय बहुमूल्येन विक्रीतवान्मह्यम्। तच्च सूचीकरेण कञ्चुकीकृत्य शुक्रवासर इति निशायामेवाचिरं धृत्वा निर्मुक्तवती। अद्य तु यावद्धारयामि घटिकार्धेनैव द्वैधीभूतः। एष तु नूतन इत्येव शपमानो नेच्छति प्रतिप्रदातुं मूल्यम्। तत्प्रियेण लम्भनीयम्" इति।

अरे आपणिक, किं वनिताजनेष्वपि दर्शयसि ते वाणिज्यकौशलम् ?

किं ब्रवीषि ? कथमविज्ञाय निर्वृत्तमेकपक्षपातितां वहसि ?

नूनं चेलमिदं तु नूतनकृतं नूनं दृढं निर्मितं
नूनं रूपमपि त्रिधा सुरचितं नूनं न मूल्याधिकम्। इति।

अरे घातुक, कथं वा दिनेनैकेनैवेदं द्विधाभूतम् ?

किं ब्रवीषि ?

स्निग्धश्वेत्सदयं प्रपश्यति पुनर्यत्र द्विधा तत्कृतं
ज्ञास्यत्यद्य निदानमब्जनयनाकायोद्गतां वैकृतिम्॥ इति

(नाट्येन कञ्चुकमादाय सादरं पश्यन्।) अयि कमलवदने, नापराधी पुनरापणिकः, क्षणक्षणविजृम्भमाणकठिनकुचभूधरयुगलं ते यौवनमेव परमपराध्यति। इतः पश्य।

पूर्वेद्युर्यत्समीभूतं तदद्य किल भामिनि।
संवर्धितेन सुदृढं वक्षोजेन द्विधाकृतम्॥९१॥

तत्कुचकलशसमुन्नतिभङ्गाय परमद्य प्रथमतो यतनीयम्। अन्यथा दोषमावहेत्। सायमागत्य ते सदनं समीकरिष्यामि।

किं ब्रवीषि ? आर्यस्यायं स्वभाव इति। भवतु। (इत्यन्यतः परिक्रम्य।)

कथमत्र सौचिकमेकं परिवार्य तिष्ठन्ति प्रदीपदर्शिन्यः ।

( निरूप्य । ) अहो सूचीकरस्य विदग्धता ।

मुग्धाङ्गनामुपेतां कञ्चुककरणाय मानदम्भेन ।
सूचीकरः कुलस्त्रियमालिङ्गत्यद्य किं तरुणः ॥९२॥

( पार्श्वतो विलोक्य । ) क एष करनिहितमानपट्टः सायास इव लक्ष्यते । आः, ज्ञातम् ।

तिर्यक्कु भूधरकुचां मातुं यत्तः समानतन्तुरयम् ।
आपार्श्वपूरितकरः पश्यति परितश्च लोलनेत्रान्तः ॥९३॥

अरे मूढ, किं परिक्लप्तेन मानतन्तुनैव मातुमेनामुद्युक्तोऽसि ।

एतस्याः स्तनमण्डलं वलयितुं नालं परो वासुकिः
यस्त्रिर्मन्थरभूधरं स ललितं बध्नाति पूर्वं दृढम् ।

किं ब्रवीषि ?

एषा वक्ति शिलाकठोरकुचभृत्सर्वाः कृताः कञ्चुली-
न्यूना एव कलेबरस्य न पुनर्मातुं परं पारये ॥९४॥ इति ।

उद्यतो भव । चिरादपि साधयिष्यसि ।

( इत्यन्यतो दृष्ट्वा । )

अहो शाकटिकस्य पौरैरविज्ञातं वैदग्ध्यम् ।

भारस्यायं समकृतिमिषादावहन्पार्श्वभागे
साध्वीमूरुं करिकरसमं जानुनि स्वस्य कृत्वा ।
वक्षोजाग्रं स्पृशति सततं बाहुपृष्ठेन धृष्टो
वाहं वेगादिव स तु तुदन्सारथिः शाकटस्य ॥९५॥

( अन्यतो दृष्ट्वा । ) कैषा विपणिमुखमधिष्ठाय वलयमादधाति ।

तटिद्भिरेनां विरचय्य कान्तां
मनोजवेधा जनमोहनाय ।

नूनं धरित्र्यां स्थितिकारणाय
स्तनद्वयीभारशिलां चकार ॥९६॥

( निरूप्य । )

मामेति सा गदन्ती सीत्कारमनारतं च संदधती ।
ज्ञपयति नवां तु केलिं भ्रमयन्ती भ्रूलतां च सखेदा ॥९७॥

वलयमोचनानन्तरं कथमेतौ कलहायेते, पश्यामि तावत् । ( इत्युपसृत्य । ) अरे वलयवणिक्, किमबलामनाथामेनां तर्जयसि ?

किं ब्रवीषि ? "बहूनि वलयानि विच्छिद्य करधृतानामेव मूल्यमर्पयत्येषा" इति ।

अयि कृशोदरि, किमु न्याय्यमेतद् बहु धनं व्ययीकृत्यापि विक्रयणस्य विरलतया विदूयमानहृदो वणिजो विलोभनं नाम ?

किं ब्रवीषि ? "मन्मुखमविरलं वीक्षमाणेन 'क्व ते निलयः किं ते वयः' इति प्रश्नानुप्रश्निकां कुर्वता अनवधानेन भग्नानामपि किं मया दातव्यम्" इति ।

अरे आपणिक, अपि श्रुतं प्रियसख्या वचनम् ?

किं ब्रूषे ? "न हि मय्यपराधलेशस्यापि प्रसक्तिः ? पञ्चदशवयस्काया अप्यस्या इयन्तं परिणाहमासादितवती कुचमण्डले अष्टादशे वयसि कियन्तं परिणाहं संपादयिष्यत इति चिन्ताकुलचेतसा भग्नानि वलयानि" इति ।

अयि प्रेयसि, अपराधः पुनस्ते कुचकलशयोः किल निष्पतति।

किं ब्रवीषि? यद्येषोऽदृष्टचरयुवतिजन इव मम कुचयुगमेव दृष्ट्वाऽधिगत इयन्तं विस्मयं यदि पश्यति मत्कनीयसीकुचभूधरं कामवस्थां गमिष्यतीति विस्मये ।

अनुदिनविवर्धमानस्तनगिरिभारेण पूर्वनतकायाम् ।
परिचुम्बितुमिह कृच्छ्राद्युवका यत्ताश्च पारयन्ति न हि ॥ इति ।

अरे आपणिक मुञ्चेमाम् । यदि तामानयेत सर्वाणि तव विपणिगतानि वलयानि भङ्क्त्वा कपालहस्तं त्वां विधास्यति । प्रियसखीं प्रति किं ब्रवीषि ? अयि कलशस्तनि, यथेष्टं गच्छ। करधृतवलयानामपि वा माऽस्तु मूल्यदानम् । मा पुनस्तामिहानय इति । कथमुत्स्मयमाना गतैव ।

( पदान्तरे स्थित्वा । ) किमत्र चत्वरे महान्कोलाहलः ।

चरणधृतकृपाणौ चक्रवद्घूर्णमानौ
समबलपरिमाणौ युद्धकृत्यप्रवीणौ ।
कुरुत इह हि रोषादाहवं त्यक्तनीडौ
परहनननिबद्धोत्साहिनौ ताम्रचूडौ ॥९९॥

( अन्यतो दृष्ट्वा, साश्चर्यम् । ) क्षणक्षणप्रतीक्षमाणकृतान्ताह्वानपत्रिकयोरपि मेषयोरयमाहवसमुत्साहः ।

विटनटगणिकाभिः प्रेरितावत्र मेषौ
सरभसमपि यात्वा पार्श्वभागे च पृष्ठे ।
भृशमिह कलुषाक्षौ किंचिदानम्रशीर्षौ
विधमत इह रक्तस्राविफालेन मूढौ ॥१००॥

( अन्यतः परिक्रम्य । ) किमत्र जनौघोऽयं परिवार्य तिष्ठन्सादरं पश्यति ।

कट्यां निबद्धदृढकच्छविशेषभीमौ
भीमाकृती सुभृशमांसलबाहुदण्डौ ।
अन्योन्यपातनकृताध्यवसायरूक्षौ
चक्रादिमण्डलमिमौ भ्रमतोऽत्र मल्लौ ॥१०१॥

किमेतेषामायोधनपराणां दर्शनेन । (इत्यन्यतो दृष्ट्वा ।) एताः किल चमरीदृशः समायान्ति सहाध्यायिनीभिर्विद्याशालायाः ।

(निर्वर्ण्य ।)

अपाङ्गं साकूतं नवयुवजनं द्रष्टुमसकृ-
च्छ्रुतिर्बद्धोत्साहा रतिकलहकेलीषु निभृतम् ।
स्तनौ यूना दृश्यौ लिकुचफलसाम्यं विदधतौ
वयःसंधिप्रेक्ष्यं हरति हृदयं मे वपुरिदम् ॥१०२॥

(अन्यतो दृष्ट्वा ।)

अस्याः किल ।

गतिर्मन्दा पीनस्तनजघनभारेण सुतनो-
र्भृशं भोगीवाद्य स्फुरति मृदुला रोमलतिका ।
स्तनौ बद्धस्पर्धौ शिखरिशिखरेणेव कलितौ
स्पृहादृष्टिर्यूनि प्रसरति भयात्संकुचति च ॥१०३॥

इयं हि,

तिर्यक्पश्यति लज्जयेव सुतनुः पूर्वं युवानं गतं
संकोचाद्विमना इवास्त्यवहिता केलीकथास्वादरात् ।
वक्तुं हृच्छयमुद्यताऽपि वयसा तुल्येष्वशक्ता भयाद्
गूहन्ती हृदये मनोजकदनं दीना पुनः पश्यति ॥१०४॥

(अन्यतो दृष्ट्वा ।)

केषा निवृत्तातपतया लम्बमानसखीकरपल्लवकलितकरांगुलेर्मन्दमभिसर्पति तरुमूलमिदम् ।

गच्छन्ती विजनेऽपि सा पथि वृथा संगोपयन्ती कुचौ
गर्वेणैव न लज्जया कृशतनुर्वस्त्राञ्चलेन स्वयम् ।
स्निग्धैश्चापि सखीजनैः परिवृता मुग्धा परं निर्भये
त्रस्यत्येव भृशं प्रवृद्धशरभे यान्तीव बाला मृगी ॥१०५॥

अहो रमणीयता दिनान्तारुणतपनकिरणपिञ्जरिताया अस्या गात्रलतिकायाः ।

लावण्याम्बुभिरङ्गनेयमधुना क्लृप्ताभिषेकक्रिया
नूनं पञ्चशरेण किं नु बलवत्प्राप्तव्यनैजाहवे ।
सैनापत्यपदेऽन्यथा पुनरियं नूत्नेव भात्यद्य मे
नेत्राकर्षणरूपसंपदमला केनेह वा हेतुना ॥१०६॥

शिलातले समुपविशन्ती ।

एकान्ते परिवीक्ष्य वक्षसिरुहौ तालोपमौ भामिनी
संतुष्टा हृदये यथैव कृपणः प्राप्येव वित्तार्णवम् ।
ध्यात्वा व्यर्थगतं नवं निजवयः सीदत्यशर्माकुला
संकीर्णेव वनाग्निना गजसती दीर्घं श्वसित्याकुला ॥

उपसृत्यैनां संलपामि । ( इति परिक्रम्य । ) एषा किल हाटकमित्रस्य तनूजा हेमाङ्गी वर्षत्रयात्प्रागेव कुसुमिता । नवयुवतीनामयं किल स्वभावः ।

बालैर्लोलतमाऽपि केलिकुतुकैर्मन्दं त्यजन्ती च ता-
न्स्पृष्टाऽज्ञातशरीरभावविपर्यैः संकोचयत्यङ्गकम् ।
प्राप्तुं वा दृढयौवनाश्च तरुणीरप्राप्तधैर्याः स्वयं
कालं व्यर्थमहो नयन्ति कलुषा एकान्तमेवाश्रिताः ॥

( अन्यच्च । )

जायन्ते हृदये पुनर्नवनवा भूषाम्बरेषु स्पृहाः
प्राप्यापि क्षणभङ्गुरा च भवति प्रीतिस्तु तेष्वन्वहम् ।
क्रुध्यन्ति क्षणतोऽपि ता भृशतरं त्वव्यक्तमूलं पुनः
स्प्रष्टव्या न लतेति पन्नग इति प्रोल्लङ्घनीया न तु ॥

अयि सुलोचने,

किमेकान्तमाश्रित्य दीर्घं निश्वसिषि ?

किं ब्रवीषि ? किमविदितं देवस्येति । ज्ञातमखिलं भावेनैव । असह्यमिदमनवाप्तपतिसमागमं नामाबलानामात्तकुसुमानाम् । भवतु, कुतो वा न परिणीताऽसि ?

किं ब्रवीषि ? "पुरा किल मम पिता प्रत्यग्रयौवनामपि मां राजकीयाज्ञानियमितपरिणयवयोन्यूनां मत्वा न पर्यणीनयत् । अतः परमन्विष्यन्नपि जामातरमनधिगतस्वाभिलषितवरव्याजेन चिरं कालमनीनयत् । अद्य पुनरुपयमप्रस्तावोऽपि गाढं सुप्तः" इति ।

भवतु नाम । पतिगृहपातालमुखपतनात्पातुमेव प्रमदाजनान्पञ्चशरः पार्थिवाज्ञामेनां परिकलितवानिति मन्ये । अत इतः परं संचर यथाभिलषितम् । आश्रय गणिकावीथीम् । अनुभुङ्क्ष्व विटनटसार्वभौमान् । किं वदसि ? स्वैरिण्यः सदोपवासिन्य इति किल श्रूयत इति ।

मैवम् । पुरावृत्तमेतत् । अद्य तु,

पटनाढ्यकारिधनिनो मृगयन्ते तास्तु पुंश्चलीः प्रायः ।<br>
स्वैरं स्वयमुपभुज्य प्रलभन्ते वित्तमपि ताभ्यः ॥११०॥

सोत्साहं किं ब्रवीषि ?

अनुगृहीताऽस्मि । अद्यैव पातिव्रत्यमहादुर्गादात्मानमुपमोचयन्ती भवदनुग्रहेण पारदारिकमहासौधमधिरोहामि तावदिति ।

भवतु, पञ्चबाणः प्रतिदिनमेकमनुप्रेष्यानुगृह्णातु भवतीम् ।

( इत्यन्यतः परिक्रम्योर्ध्वमवलोक्य । )

एषा किल सौधमुखमास्थाय प्रसाधयति चात्मानम् ।

इयं वेणीबन्धं विरचयति फुल्लाम्बुजमिव<br>
प्रसूनं वर्णाढ्यं क्षिपति नवमीचन्द्रसदृशम् ।<br>
पुनः प्रक्षाल्यास्यं वरनवसुधाखण्डनिचयैः<br>
प्रलिम्पन्ती लेपं नवघृतसमं श्वेतमधुरम् ॥१११॥

अपि च,

ततो धृत्वा चार्धोरुकवसनमत्यन्तमृदुलं
नवं वासः सूक्ष्मं धरति लतिकाचित्रितमपि ।
उपर्याराद्धत्ते कुचकलशमात्रावरणिकां
पुनर्दोर्मूलश्रीविवरणचणं कञ्चुकमपि ॥११२॥

ततस्तु,

प्रकोष्ठे सा कृत्वा कनकघटिकायन्त्रममलं
धरन्ती वित्तौघं हरिणशिशुचर्मप्रणिहितम् ।
पदत्राणारूढा करकलितचित्रातपहरा
क्व वा निर्यात्येषा सुतनुरिह किं नृत्यसदनम् ॥११३॥

भवतु, यथेप्सितं साधयत्वेषा । ( इति परिक्रम्य । )

इदं हि निकेतनं हरतीव मे नयनयुगलम् ( निर्वर्ण्य । ) लीलामन्दिरमिदं नितम्बिनीनाम् । भवतु, पश्यामि । ( इति परिक्रम्य । ) एष किल नीलश्वेतसुधासंलिप्तसकलभित्तिकेन सर्वत्र संदृश्यमानचारुरचितवातायनशतपरिमण्डितेन द्वित्रभौमेन समावृतः, सुखस्पर्शनीलरक्तहरितादिकौशेयसमलंकृतसुखासनशतापूरितान्तःपदः, सर्वत्र लम्बमानचित्रपात्रविराजमानसंदर्शनीयच्छदकुसुमप्रतानिनीसहस्रपरिमण्डितः, तत्र तत्र चक्राकारकृतपञ्चषपरमासनपरिवृतः, मध्यविराजमानवर्णविकृतबाडिशविभूषितचतुरश्रसमसर्वसहापरिष्कृतपार्श्वभागः, नेत्रहारिमुकुरपात्रपरिदृश्यमानमधुमैरेयापूरितान्तर्गृहः, विलासिनीनां विलासावासः समाह्वयतीव माम् । अन्तः प्रविशामि तावत् । ( इत्युपसृत्य । ) ।

अहो रमणीयता संनिवेशस्य ।

नयनमिह दीपसंहतिरबला इव चारु कर्षति द्युत्या ।
विक्रीडितमिव तासां वल्लीबृन्दं सकौतुकं तनुते ॥११४॥

अत्र किल पञ्चषाः प्रमदा हस्तविस्तृतपत्रनिचयमनिमेषं पश्यन्त्यश्चित्रलिखिता इव दृश्यन्ते । ( निरूप्य ।) कथमिमाश्चतुरधिकत्रिशतं नाम पत्रविहारमभिविहरन्ति । उचितैव चित्तापहृतिः ।

( इत्यन्यतो दृष्ट्वा । )

अत्र किल विहरन्ति करकलितकन्दुकविद्राविण्यः कातराक्ष्यः ।

( साश्चर्यम् । )

आजानुलम्बिदृढबद्धदुकूलरम्या
आबाहुमूलकुचमात्रपटं दधानाः ।
उल्लङ्घ्य पार्श्वमभिहत्य च कन्दुकानि
क्रीडन्ति कन्दुकविहारमिहायताक्ष्यः ॥११५॥

पार्श्वतः किल,

दृढनिबद्धनिजावरणोत्थित-
स्तनभराकलितेक्षणमानसाः ।
परित एत्य परःशतमानवाः
सकुतुकं ललितं रसयन्ति ते ॥११६॥

अत्र किल मम मनो विनोदयत्येतासां विहारः ।

संनम्रस्तनमण्डलं पुनरियं प्रोन्नामयन्त्यंशुकैः
क्रीडत्यात्तसुमेव कन्दुकमहो पञ्चाशदब्दान्विता ।
मुग्धाः केलिवशेन वक्षसि पुनः संताडनायोद्यता-
श्चेलं षड्गुणितं समीक्ष्य सुभृशं खिद्यन्ति सीदन्ति च ॥

सकुतुकमेषा किल,

कोपेन कन्दुकमियं प्रहिणोति वृद्धा
वामा पयोधरतटे नवयौवनायाः ।
प्रत्यागतेन कठिनाचलपातनोत्थ-
वेगेन ताम्यति भृशं प्रतिहन्यमाना ॥११८॥

इयमत्र मम प्रियसखस्य विहारशेखरस्य पूर्वजा मदनमञ्जरी । कथं सप्ताष्टाप्यपत्यानि परित्यज्य कन्दुकप्रेषणीहस्ता परिक्रीडति । इतश्च दृष्टमात्रं माम्, विहाय कन्दुकमभियाति ।

अयि मदनमञ्जरि, शोभसे नितरां कन्दुकप्रेषणीहस्ता । तदुचितप्रसाधनेन च । भवतु, मृतानि किं तेऽपत्यानि? येन त्वं निर्विशङ्कं चिरं परिक्रीडसे ।

किं ब्रवीषि? "न मृतानि । मासद्वयात्प्रागपि शिशुरेकः कुटुम्बगणनायामधिकतामातनोत्" इति ।

कथं तमपि परित्यज्यायाताऽसि?

किं ब्रवीषि? "भर्तेति नाम्ना किमर्थमेकः समभिवर्तते" इति । उचितमेवैतत् । (स्वगतम् ।) स किल,

वहन्नङ्केनैकं शिशुमपि च संक्रन्दनपरं
क्षुधा क्षीणं चान्यं दृढतरशिरोरोगमपरम् ।
कराभ्यामाकर्षंश्चलति गृहपृष्ठेषु सुचिरं
प्रियामन्विष्यन्नप्यटति च स पूर्वापरदिशोः ॥११९॥

(प्रकाशम् ।) अयि कुशलाऽसि । उचिता च नागरिकामण्डलाधिपत्यस्य । यत्त्वया भर्तृपदं यथार्थतामुपनीतम् । नाहमुपरुन्धे । गच्छ, विहर यथेष्टम् ।

(इत्यन्यतः परिक्रम्य, सादरं पश्यन् ।)

किमत्र मन्दिरे मेषशिशुमेकः स्वांसे निधाय तत्पुच्छं चुम्बति । अयं च पन्नगमिव वक्षसि कुण्डलितं धरन् तद्वालं मुखे करोति । किमेतेषां समवेषाणां दर्शनमात्रेण युवानो युवत्यश्च सरभसमन्तरायान्ति । पश्यामि (इति परिक्रम्य ।) कथमेते वाद्यविशेषाः!

एते षोडश मनुजा वाद्यवरान्वादयन्ति किल विविधान् ।
स्थायित्रये च क्लृप्तांस्ततसुषिरघनांस्तथाऽऽनद्धान् ॥१२०॥

अहो मनोहरता बृन्दातोद्यानाम् !

विस्मार्य भावमन्यं विवशयति मनो विनाऽपि हठयोगम् ।
मदयति नटयति रसयत्यपि मां मोदयति मोहयति ॥

कथं तरुण्यस्तरुणान्करे गृहीत्वा नर्तनमारभन्ते ।

उन्नम्य पाणिकमलं धृतमङ्गुलीभि-
श्चित्तेप्सितस्य तरुणस्य पुनः प्रगल्भाः ।
वक्षोनिविष्टकुचभारमिहानताङ्ग्यो
नृत्यन्ति तालसदृशं किल पङ्कजाक्ष्यः ॥१२२॥

कथमेता अचिरेणैव सह नृत्यन्तं परित्यज्य पुनरन्येन नटन्ति ।

नवं नवमिहाङ्गना नयनहारिरूपोच्चयं
प्रगृह्य करपल्लवैः स्तनभरं निधायोरसि ।
नटन्ति नवनागरं परमुपेत्य नेपथ्यकं
विहर्तुमिह चेप्सितैः कुलवधूः समायात्यहो ॥१२३॥

पटनाट्यादपि परमुपकरोति विहारसदनं वामविलोचनानाम् ।

एकान्ते रचनीयमेव ललितं दीपेषु निर्वापिते
ष्वन्यालक्षितमेव वैद्युतमये नाट्ये प्रगल्भैरपि ।
गेहेऽस्मिञ्शतदीपदीपितनिजप्रान्ते जने पश्यति
प्रोद्घुष्टे मुरजादिवाद्यनिचये क्रीडन्ति नृत्यन्ति च ॥१२४॥

अनुचितमन्तराययितुमेता मत्संलापेन नृत्यपरायणाः ।

( इति परिक्रम्य । )

कथमस्तशिखरमवतरितुमभिलषतीवाहस्पतिः ।

कार्तस्वरेण कवचेन विभूष्यमाणां
वीक्ष्येव घस्रपतिना भुवमस्रहस्तैः ।
वेश्यास्तु यान्ति सहसा परिक्लृप्त भूषा
नूनं विटा धनचयेन कलत्रितास्ताः ॥१२५॥

अतो न विलम्बनीयम् । त्वरितमितो मञ्जुभाषिणीपार्श्वमासादयिष्यामि ( इति परिक्रम्य । ) इदमेव प्रियसख्याः सदनम् । कथं मञ्जुभाषिणी स्वयमेव सकौतुकमायाति । अयि प्रेयसि, क्षमस्व विलम्बितागमनं माम् । सोत्स्मयं ममांसे करपल्लवं विन्यस्यन्ती किं ब्रवीषि ? "कया वा मुग्धया रुद्धा गतिः" इति । को रमेतैताभिरविदितमदनतन्त्राभिर्मुग्धाभिः ।

पैशल्यं वा करचरणयोः किंचिदुन्नम्रभावो
वक्षःपीठे भवतु सुभृशं विस्तृतिर्वा नितम्बे ।
संदृश्या वा त्रिवलिरथ वा रोमराजिर्वलग्ने
किं वाऽप्येतैर्यदि पुनरियं संवृता ह्रीपटेन ॥१२६॥

शृणु चेष्टितमेतस्याः ।

रहः केलीस्थानं गमयति हठेनैव रमणे
रतेच्छां संप्राप्याप्यहह कलुषा विद्रुतवती ।
किमर्थं स्वां शय्यामपि पुनरनासाद्य सुभृशं
प्रमुञ्चन्ती चाश्रु प्रतपति कृशा निश्वसिति सा ॥१२७॥

सहस्ततालं किं ब्रवीषि ? "अद्यैव परिज्ञातं प्रियसखस्य प्रगल्भाङ्गनावलनकारणम्" इति ।

भवतु, कुतो वा न प्रवृत्तो डोलाविहारः ?

किं ब्रवीषि ? आर्यस्यैव संनिधानं प्रतीक्ष इति ।

तर्हि प्रारभ्यतां विहारः । किं कंजलोचना कुञ्चिताङ्गुलिः कलं गायन्ती विपञ्चीं वादयितुमारभते । ( श्रुतिमभिनीय । ) कथं गायसि ?

जयतु जयतु देवः पञ्चबाणो यदीया-
मुपकृतिमिह काङ्क्षत्यात्मभूः सृष्टिकृत्ये।
जडमपि भुवनं यद्दृष्टिपातेन जीव-
द्रसयति निखिलांश्च प्राणिनः सर्वदाऽपि ॥१२८॥

अहो मधुरता परिवादिनीनिनदस्य विशेषतः पङ्कजाक्षी-गीतिसंयुतस्य।

हरति हृदयमेतद्वल्लकीनादजुष्टं
सुमधुरगलजातं नायिकाप्रेमगीतम्।
परिसरधृतकोकं प्रावृषीवाद्य पद्मं
किसलयमिव सायं भानुरोचिः प्रदीप्तम् ॥१२९॥

सादरं किं ब्रवीषि? पार्श्वासनमास्थाय कृतार्थयतु प्रियसखी-मिति।

(नाट्येनोपविश्य।)

घ्राणहारिकुसुमस्रगावृता हेमतन्तुकृतचेलभूषिता।
नन्दयत्यहह कामिनीव मां डोलिका नवनवं विनिर्मिता॥

अयि प्रेयसि, पश्य।

प्रोन्नतं प्रथमतश्चलन्त्यहो स्मारयत्यखिलपांसुलादशाम्।
सच्चरित्रकुलयोषितामियं दर्शयत्यवनता सुखं प्रिये ॥१३१॥

किं ब्रवीषि? आर्येणैव सर्वं विज्ञायत इति। (आकाशमुद्वीक्ष्य, सोद्वेगम्।) किमुदितः कलाधरः। (सश्लाघम्।)

भुक्त्वाऽसौ रजनीं सुरारिनिकरप्रीतिंकरां नित्यशः
सप्तापि द्विदशाधिकान्स्वयमहो तारागणान्सेवते।
तैरप्येष सुधाकरः पुनरितोऽसंपूरितानन्यज-
स्तारामप्यपरां गुरोरपि सतीं कामातुरो गच्छति ॥१३२॥

( स्वगतम् । ) स्यमन्तकः परं ममागमनं प्रतीक्षमाणोऽभिवर्तेत ।

( प्रकाशम् ) अयि प्रेयसि, अनुमन्यस्व मामावश्यिककार्यनिर्वर्तनाय । पुनस्त्वामचिरादेव द्रक्ष्यामि । सविषादं किं ब्रवीषि ? किमेतस्मादपि परमावश्यिकं कार्यम् । भवतु, ताम्बूलग्रहणेन कृतार्थयतु प्रियजनमिति।

( करेण वीटिकां गृह्णान् किंचित्परिक्रम्य । ) किं स्यमन्तको ममाभिमुखमायाति । दृष्टमात्रं मां सहर्षं किं ब्रवीषि ? कथं प्रियजनेन विलम्ब्यत इति ।

किं सा हस्तगता ?

किं ब्रवीषि ? कः संदेहः पूर्वोक्तमार्गेणैव समानीता दूतिकया निष्कुटे निक्षिप्ता । उपभुङ्क्ष्व च यथेष्टमिति ।

( सत्वरं परिक्रम्य । ) कथं दूतिकापार्श्वमधितिष्ठन्ती लज्जयावनता तिष्ठति । दूतिके, किं ब्रवीषि ?

अनधिगतकामतन्त्रेणेयं भुक्ता चिरेण किल पत्या ।
अनवाप्तकामपूर्तिर्निधुवनकुशलं प्रतीक्षतेऽद्य त्वाम् ॥ इति ।

यथाकौशलं तर्पयाम्येनाम् । ( इति वदनमुन्नमयन ) अयि प्रियसखि,

अकलङ्कमेव मन्ये वदनं ते कुमुदबान्धवं तन्वि ।
मम नयनयुग्मजीवंजीवं पातुं प्रियेऽनुमन्यस्व ॥१३४॥

सस्मितं किं ब्रवीषि ? स्वाधीना किलाहं प्रियसखस्येति । तर्हि समवाप्तं जीवितफलम् ।

स्यमन्तक, किं ब्रवीषि ? इतश्च किं करणीयमिति ।

किमास्ते कर्तव्यम् ।

शीतो गन्धवहः प्रतप्तमिह मे शान्तं विधत्ते वपुः
सोऽयं शीतकरश्च तोषयति मां दूरप्रियाक्लेशितम् ।
प्राप्ता जीवितनाडिरङ्गजकलाधीरा युवाभ्यामिह
प्राप्तं सर्वमिदं किमन्यदिह मे लब्धव्यमास्ते भुवि ॥

तथाऽपीदमस्तु भरतवाक्यम् ।

प्रजानां यो वाग्भिः सचिवपदवीं प्राप्य नियतो
भुवं त्वेतां प्रत्नां सरणिमनुसृत्यैव वहतु ।
जनः स्वाचारान्मा प्रजहतु पुनः कृच्छ्रगमितः
पतिप्रीत्या दीव्यन्त्वनुदिनमिमा वामनयनाः ॥१३६॥

अपि च,

दुष्टमपि लोकमेनं दृष्टिः पायाद्रघोरपत्यस्य ।
अष्टसु च दिक्षु काव्यं तुष्टं कुर्यात्कलावतां चेतः ॥१३७॥

( इति निष्क्रान्तः । )

नवनिमिमिते कलावयमब्दे शृङ्गारशेखरो भाणः ।
परितोषाय बुधानां रचितः श्रीसुन्दरेशेन ॥

इति
श्री सुन्दरेशशर्मविरचितः
शृङ्गारशेखरभाणः
समाप्तः

